हेतोः साध्यवत्पक्षभिन्नदृष्टान्तवृत्तित्वेनाव्याप्तेराह—सकलेति । साकल्यं साध्याभाववति साध्ये च बोध्यम् ।

---

( अथ चतुर्थलक्षणं ) हेतोरिति । नानाधिकरणकस्येत्यादिः । अव्याप्तिरिति । एतद्रूपवान् एतद्रसादित्यादौ । एतद्रसाधिकरणे एतद्रूपाधिकरणस्य द्वित्वादिनाभेदसत्त्वेपि व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन साध्यवद्भिन्नप्रतियोगितायाः प्रतियोग्यवृत्तित्वेन वा भेदस्य विशेषितत्वेन लक्षणगमनसंभवान्नासंभवो दर्शितः ।

साकल्यमिति । बोध्यमित्यस्य विशेषणमित्यादिः । अत्र सा-

कृष्णभट्टीय ।

स्वनिरूपितत्वस्वसामानाधिकरण्योभयसम्बन्धेन प्रतियोगिताविशिष्टान्यत्वमर्थः । न च वह्निमद्भेदस्य स्वाभावरूपप्रतियोगिवृत्तित्वात् तादात्म्यावच्छेदप्रतियोगितोपादानात् । नैचोपक्रान्ताव्याप्यवृत्तिसाध्यकाव्याप्तिनिरासाच्चेद समञ्जसमिति वाच्यम् । एतत्कपिसंयोगवान्नेतत्त्वादित्यादौ प्रतियोगित्वादिविशेषणसत्त्वेन लक्षणसंगते । कपिसंयोगी एतत्त्वादित्यादौ कपिसंयोगवद्घटादौ भेदमादायाव्याप्तावप्यव्याप्यवृत्तिसाध्यकसद्धेतुत्वावच्छेदेनाव्याप्तिमात्रनिरासासंभवात् । [इति तृतीयलक्षणम् ।]

[अथ चतुर्थलक्षणम् ।] दीधितौ साध्येचेति । ननु महानसीयवह्निमद्देशेऽपि वह्न्यन्तरमादाय साकल्यसत्त्वात्तदभावमादायाव्याप्तिः । स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साकल्यस्य साध्याभावगामित्वे तु यावत्त्वावच्छिन्नाभावमादायाव्याप्तिः । न च साकल्योपादानात्साध्यतावच्छेदकव्यापकतावच्छेदकस्य प्रतियोगिताकत्वमर्थः । तेन प्रतियोगितायाः स्वरूपसम्बन्धरूपत्वेऽपि न वह्न्याद्यभावासंग्रह इति वाच्यम् । तथा सत्येकव्यक्तिक साध्यमि-

न्यायरत्नं ।

अत्रेद चिन्त्यम् । प्रतियोगितासंसर्गककपिसंयोगत्वावच्छिन्नप्रकारकप्रमा प्रतिगुणविधया स्वविषयकलौकिकप्रत्यक्षं प्रति विषयविधया च कपिसंयोगत्वावच्छिन्नाभावस्य तादात्म्यसम्बन्धेन कारणत्वे कल्पनीयकारणतावच्छेदकत्वं यदि कपिसंयोगाभावत्वस्य तदा गौरवं स्यादिति कपिसंयोगाभावनिष्ठतद्व्यक्तित्वमेव कारणतावच्छेदकं वाच्यम् । तथा चाधिकरणभेदेनाभावभेदे तद्व्यक्तित्वस्य कारणतावच्छेदकत्वं न सम्भवतीत्यधिकरणभेदेऽप्यभावाभेद एव स्वीकर्तुमुचित इति ।
[इति तृतीयलक्षणम् ।]

---

१ एतदारभ्य दीधितावित्यन्तं मै पु. ना.

ध्याभाववति साकल्यविशेषणसत्त्वे एव साध्ये तद्विशेषणव्यावृत्तिः सगच्छते । अन्यथा साध्याभाववत्तायाः हेतुमत्साधारण्येऽपि साध्याभाववद्यत्किंचिद्व्यक्तिनिष्ठाभावप्रतियोगित्वमादाय नानाव्यक्तिसाध्यकसद्धेतौ लक्षणसमन्वयसम्भवात् । अतः साध्ये तदभाववति चेत्यनुक्त्वा साध्याभाववति साकल्यं प्रथमतो दर्शितम् । नच साध्याभाववति साकल्यविशेषणासत्त्वेऽपि वह्निमान्पर्वतान्यत्वादित्यादावतिव्याप्तिवारणमेव साध्ये साकल्यप्रयोजनमस्ति । उभयत्र साकल्यविशेषणादाने यत्किंचित्साध्याभाववति पर्वते हेतुभावसत्त्वेनातिव्याप्तिः । साध्ये साकल्यविशेषणसत्त्वे तु ह्रदादेरेव सकलसाध्याभाववत्तया तत्र हेतुसत्त्वेनातिव्याप्त्युद्धारादिति नोक्ताभिप्रायोपवर्णनं सम्यगिति वाच्यम् । साध्याभाववति साकल्यविशेषणासत्त्वेऽपि साध्ये साकल्यविशेषणस्य उक्तातिव्याप्तिवारणप्रयोजनवत्त्वसम्भवेऽपि साकल्यविशेषणस्य वक्ष्यमाणप्रयोजनस्यैव वास्तव-

कृष्णभट्टीय ।

त्यादिना साध्ये साकल्यप्रसिद्धाभिधानसगतिरिति चेत । कृत्स्नसाध्यपर्याप्तस्य पर्याप्तिसम्बन्धे न विशेष्यम् । यद्वा साध्यतावच्छेदकसमानाधिकरणयावद्धर्मसमानाधिकरणैकवृत्तिप्रतियोगिताकाभावः सकलसाध्याभावपदार्थः । अनेकवृत्तित्वञ्च स्वानुयोगिवृत्तित्वस्वानाधिकरणप्रतियोगिवृत्तित्वोभयसम्बन्धेन भेदवत्त्वम् । तेन द्रव्यत्वादेर्द्रव्यत्वघटत्वोभयभेदस्यापि न क्षतिः । स्वानाधिकरणनिवेशनात् । एवञ्च साध्यैक्येऽपि साध्यतावच्छेदकीभूतनानाव्यक्तिनिष्ठानुयोगितानां नानात्वेऽपि अनेकव्यक्त्यभावात्तत्प्रसिद्धिरभिधानसगतिः । साध्यतावच्छेदकव्यापकतानैकवृत्तिप्रतियोगिताक इत्यपि कश्चित् । विपक्षविशेषमाह—साध्यपदं विशेषणमिति । यत्किंचिद्विपक्षव्यावर्तकविशेषं । वास्तवसमानाधिकरणविशेषणान्तरं प्रतिपाद्य । एवञ्च सामान्यविपर्ययस्य द्रव्यत्वादित्यादौ, पक्षादिरूपसपक्षविपक्षसाध्याभाववत्तुल्यादिनिष्ठाभावप्रतियोगित्वेऽपि तत्प्रयोजनाभावस्य वास्तवस्य वास्तवसाध्याभिधान प्रदर्शनस्य साध्याभाववति साकल्यविशेषणविनाशुपपत्तिरित्याशय ।

व्यायरत्न ।

[ अथ चतुर्थलक्षणम् ] साकल्य साध्याभाववति साध्ये च योजयितुम् [illegible] —साध्यमित्यस्यैति । वास्तवत्वेति । [illegible]

१ [illegible] २ [illegible]

कृष्णंभट्टीयं ।

ननु साध्ये साकल्यस्य मुख्यप्रयोजनमायास्यत्येव । एतद्रूपगगनोभयवानेत-त्वादित्यादौ प्रतियोगितावच्छेदकावच्छिन्नाधिकरणाप्रसिद्ध्या एतद्रूपगगनोभयाभावस्य लक्षणघटकतया एतद्रूपाभावमादायातिव्याप्तेर्विपक्षे साकल्यदानेनाशक्यवारणायाः[त] साध्ये साकल्यविशेषणेनैव वारणात् । तस्य सकलसाध्याप्रतियोगिकत्वात् । एतद्रूपगगनोभयाभावस्य प्रतियोगिवैयधिकरण्याभावात् । नच प्रतियोगिवैयधिकरण्यघटकप्रतियोगितावच्छेदकवैशिष्ट्यस्य साध्यतावच्छेदकताघटकसंबन्धेन निवेशनीयतया पर्याप्तिसंबन्धेनैतद्रूपत्वविशिष्टासंभवादेतद्रूपाभावस्य लक्षणाघटकतया साध्ये साकल्यविशेषणासत्त्वेऽपि न क्षतिरिति वाच्यम् । तथाप्येतद्रूपत्वसोभयाभावमादायातिव्याप्तेर्दुर्वारत्वात् । नचैवमपि एतद्रूपगगनान्यतराभावमादायातिव्याप्तिर्दुर्वारैवेति वाच्यम् । अन्यतरत्वस्य प्रत्येकधर्मत्वेन तदवच्छिन्नाभावस्य सकलसाध्यनिष्ठप्रतियोगिताकत्वाभावात् । तस्यैतद्रूपाभावसमनियतत्वेन तत्र लाघवेनैतद्रूपत्वस्यैव प्रतियोगितावच्छेदकत्वोपगमाच्च । नच साध्ये साकल्यानुपादानेऽपि तयैतद्रूपवद्वृत्तित्वावच्छिन्नाभावं तद्घटावृत्तित्वावच्छिन्नाभावं वादाय नातिव्याप्तिरिति वाच्यम् । एतद्रूपप्रतियोगित्वविशिष्टसमवायसंबन्धेन एतद्रूपगगनोभयसाध्यके एतद्रूपाभावस्यैव तादृशसंबन्धेन प्रतियोगिव्यधिकरणतया तमादायातिव्याप्तिवारणाय तदावश्यकत्वात् । विशेषरूपेण संसर्गत्वानुपगमेऽपि सत्तागगनोभयवान्घटत्वादित्यादौ, शुद्धसमवायेन साध्यतायां हेतावतिव्याप्तिवारकत्वेन विनापि साध्याभाववति साकल्यं तद्विशेषणस्यावश्यकत्वात् । साध्यतावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकवैशिष्ट्योक्तावपि सत्तान्यैसमवेतोभयाभावमादायातिव्याप्तिस्त्यैव । वह्निधूमोभयाभावत्वदेतदभावस्य सर्वसंमतत्वात् । एवं द्रव्यत्वगगनोभयवान्घटादित्यादौ समवायेनैव साध्यत्वे साधनत्वे च द्रव्यत्वकपालोभयाभावमादायातिव्याप्तिर्द्रष्टव्या । एवं घटत्वप्रकारकप्रमाविशेष्यत्वीयस्वरूपसंबन्धेन घटत्वप्रकारकप्रमाविशेष्यत्वघटावृत्तिधर्मतदुभयसाध्यघटत्वादावतिव्याप्तिवारणमपि साध्ये साकल्यस्य मुख्यप्रयोजनं । तथासति तत्रैतद्घटावृत्तित्वावच्छिन्नाभावादेर्लक्षणाघटकतया साध्यतावच्छेदकावच्छिन्नाभावस्य प्रतियोगिव्यधिकरणत्वाभावेन नातिव्याप्तिरिति चेत् । साध्ये साकल्यदानेऽपि गगनघटितोक्तोभयादिसाध्यके एतद्रूपवद्व्यावृत्तित्वावच्छिन्नाभावस्य तद्घटावृत्तित्वावच्छिन्नाभावादेश्च घटत्वप्रकारकप्रमाविशेष्यत्वघटावृत्तिधर्मतदुभयसाध्यके साध्यतावच्छेदकसंबन्धेन प्रमेयसामान्याभावस्यैव सकलसाध्यनिष्ठप्रतियोगिताकतया तादृशाभावमादायातिव्याप्तिर्दुर्वारैवेति, अव्याप्तिवारणस्यैव यावत्प्रयोजनत्वात् ।

१ विरहात्. इ. मे. पा. २ तद्न्य. ३ साध्यतावच्छेदकताघटकसंबन्धेन प्रतियोगितावच्छेदकवैशिष्ट्ये प्रवेशेऽतु तादृशावृत्तित्वविशिष्टोभयत्वावच्छिन्नाभावो बोध्यः । गुरुधर्मस्यानवच्छेदकत्वात् इ. मे. पु. अ.

अव्याप्तिवारणाय साध्याभावे साकल्यविशेषणे धूमवान्वह्नेरित्यादौ साध्यतावच्छेदकीभूतसंयोगसंबन्धावच्छिन्नप्रतियोगिताकसकलसाध्याभावाधिकरणं गुणादिरेव स्यात्। अयोगोलकादेर्वह्न्यसंयुक्तत्वावच्छिन्नाभावाधिकरणत्वादित्यतिव्याप्तिः। वह्निमत्त्वप्रकारकप्रमाविषयो धूमादित्यादौ साध्यतावच्छेदकीभूतस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकतत्तद्विपक्षावृत्तित्वावच्छिन्नाभावस्य तत्तद्विपक्षमात्रवृत्तितया सकलसाध्याभावाधिकरणाप्रसिद्ध्या अव्याप्तिश्चेति तदुपेक्ष्य साध्ये साकल्यविशेषणं निवेशितम्। ननु साध्ये साकल्यविशेषणदानेऽपि वह्निमान्धूमादित्यादावव्याप्तितादवस्थ्यम्। पर्वतादावपि पर्वतीयवह्नेर्द्वित्वादिना भावसत्त्वेन सकलसाध्याभावसत्त्वात्। व्या-

कृष्णंभट्टीयं।

व्याप्तेर्दुर्वारत्वादिति भावः। जगदीशेन तु साध्यविपक्षयोः साकल्यासत्त्वेऽपि साध्याभावे साकल्याज्ञातिव्याप्तिरित्युक्तम्। तत्साध्यतावच्छेदकसंबन्धावच्छिन्नाभावप्रवेशे न संगच्छत इत्यतोऽव्याप्तिरित्युक्तम्। अव्याप्तिश्चेति। अत्र तत्तद्विपक्षावृत्तित्वादिरूपेण साध्याभावमादायासंभवः। गगनभिन्नं घटत्वादित्यादावपि तत्तद्विपक्षावृत्तित्वावच्छिन्नाभावमादायैवाव्याप्तेः संभवादिति न साधु। साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्याभावनिवेशादिति सूचितम्। नच मतान्तरे प्रतियोगितायां साध्यावच्छेदकसंबन्धानिवेशलाघवात्साध्यतावच्छेदकसंबन्धेन प्रतियोगिव्यधिकरणस्यैव प्रवेशे स्वरूपसंबन्धेन तत्तद्गुणावृत्तीना स्वरूपसंबन्धेनाभावघटितकूटाधिकरणाप्रसिद्धेर्जगदीशीयाऽतिव्याप्त्युद्धारः मथुरानाथीयोऽसंभवश्च संगच्छत एवेति वाच्यम्। कल्पद्वयमधिकृत्याव्याप्तेरेवास्माभिरभिधानाद्विरादिनेति

न्यायरत्नं।

नन्वेतद्रूपगगनोभयवानेतद्रसादित्यादौ साध्ये साकल्यविशेषणनिवेशस्य वास्तवप्रयोजनं संभवति। तथाहि साध्ये साकल्यानिवेशे प्रतियोगिव्यधिकरणैतद्रूपत्वावच्छिन्नाभावमादायातिव्याप्तिः साध्याभाववति साकल्यविशेषणेऽपि दुर्घटा। तन्निवेशे च प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणसकलसाध्याभावाप्रसिद्ध्यैव नातिव्याप्तिरिति चेन्न। साध्ये साकल्यविशेषणदानेऽप्येतद्रूपगगनान्यतरत्वावच्छिन्नाभावमादायातिव्याप्तेर्दुर्वारतया साध्यतावच्छेदकविशिष्टसाध्यसामानाधिकरण्यस्य हेतौ स्वतन्त्रविवक्षयाऽन्यथैव वा तत्रातिव्याप्तिर्वारणीयत्वात्तत्प्रयोजनस्य वास्तवत्वविरहात्। किंच निरुक्तसाध्यके एतद्रसवद्वृत्तित्वावच्छिन्नाभावस्यापि साध्ये साकल्यविशेषणासत्त्वे लक्षणघटकतया साध्याभाववति साकल्यदानेना-

साध्याभावो वा, साध्यतावच्छेदकावच्छिन्नप्रतियोगिताको ग्राह्यः । तेन विपक्षैकदेशनिष्ठाभावप्रतियोगिनि व्यभिचारिणि नातिव्याप्तिः ।

---

धर्मस्तदनवच्छिन्नप्रतियोगिताकत्वनिवेशनेच लाघवात् । साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वस्यैवाभावे निवेशनमुचितम् । किं साध्ये साकल्यविशेषणेनेत्यभिप्रेत्य तथैवाह—साध्यतावच्छेदकेति। साध्याभाववति साकल्यविशेषणप्रयोजनमाह—विपक्षेति । वैकल्पिकयोः साध्यतदभावयोः साकल्यसाध्यतावच्छेदकावच्छिन्नप्रति-

कृष्णंभट्टीयं ।

च्छेदकत्वे तु वह्नित्वप्रकारकप्रमाविशेष्यत्वाभावः सुलभो योग्य. । लाघवादिति । अथ गुरुधर्मेण साध्यतास्थलानुरोधेन प्रकृतसाध्यव्यापकतावच्छेदकरूपावच्छिन्नाभावस्य वाच्यतया कथं लाघवमिति चेन्न । व्यासज्यवृत्तित्वं विहाय साध्यतावच्छेदकापर्याप्तावच्छेदकताकत्वसामान्याभाववत्प्रतियोगिताकत्वमेव निवेश्यम् । साध्यतावच्छेदकापर्याप्तविषयताश्रयव्यासज्यवृत्तिधर्मावच्छिन्नत्वसामान्याभाववत्प्रतियोगिताकत्वनिवेशे तदपर्याप्तव्यासज्यवृत्तिधर्मनिष्ठावच्छेदकताघटितविशेषणनिवेशे, च महागौरवात् । पृथक् साध्यताघटकसंबन्धावच्छिन्नावच्छेदकताकत्वविशेषणावश्यकतापत्त्या गौरवाच । एवंच गुरुधर्मेण साध्यतास्थलानुरोधेनात्रापि पारिभाषिकं साध्यतावच्छेदकमेव निवेश्यम् । प्रमेयवह्निधूमोभयसाध्यके च वह्निधूमोभयाभाव एव लक्षणघटकः । एवं साध्ये साकल्यमप्यावश्यकम् । नच साध्यव्यापकतावच्छेदकताप्रतियोगितावच्छेदकयोरेव संबन्धावच्छिन्नत्वनिवेशान्न कालिकसंबन्धेन वह्नित्वावच्छिन्नसाध्यके समवायेन वह्नित्वविशिष्टाभावसंग्रहप्रसंगादिति वाच्यम् । सिद्धमथमिति न्यायेन साध्ये साकल्यस्यैवाभिधानात् । एवंच लाघवोक्तिसंगति । यत्संबन्धावच्छिन्नावच्छेदकत्वं सत्वक्षसाध्यनिष्ठप्रतियोगितांशे गृह्यते तेन संबन्धेन साध्यांशे साध्यतावच्छेदकं भासत इति नियमेन कालिकसंबन्धेव वह्नित्वविशिष्टाभावपरामर्शात् वह्नित्वसमवायावच्छिन्नावच्छेदकताकविधेयताशाल्यनुमित्यापत्तिरिति । एतेन [ व्यासज्यवृत्तित्वनिवेशेन ] प्रमेयवह्निधूमोभयसाध्यकेऽगतिरेव । किंच व्यासज्यवृत्तित्व गुरुधर्मस्यानवच्छेदकत्वमते, लाघवं तु तस्यावच्छेदकत्वमत

---

१ प्रतीय. १ मे पा.　२ कालिकसंबन्धेन वह्नित्वावच्छिन्नसाध्यके समवायेन वह्नित्वावच्छिन्नाभाववारणाय १. मे. पु म.　३ प्रसंग इति. मे, पा. ४ समग्र वाक्यमिद मे. पु ना.

नवा नानाव्यक्तिसाध्यकसद्धेतावव्याप्तिः ।

योगितावत्त्वविशेषणयोर्व्यावृत्तिमाह—नवेति । एकव्यक्तिके एत-द्रूपवानेतद्रसादित्यादौ हेत्वधिकरणे पूर्वक्षणवृत्तित्वविशिष्टसाध्या-भावो न प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणः । पूर्व-क्षणवृत्तित्वविशिष्ट एतद्रूपादेरेतद्रसाधिकरणे वृत्तेः । एतद्रूपवत्तद्रूपोभ-यत्वावच्छिन्नाभावोऽपि न तथा । प्रतियोगितावच्छेदकावच्छिन्नाधि-करणाप्रसिद्धेः । तत्र लक्षणसङ्गतेरित्यतो नानाव्यक्तिकेत्युक्तम् ।

कृष्णभट्टीय ।

इति सद्दर्भविरोध इत्यपाकृतमिति विभावनीयम् ।[1] ( यद्वा व्यासज्यवृत्तित्व-निवेशकल्पे साध्यतावच्छेदक पारिभाषिक न गुरुधर्मश्चावच्छेदक । व्यास ज्यवृत्तित्व घातलक्षणाभावघटक साकल्यनिवेशार्थमेव । अन्यथा तद्वत्यभाव धारणात्तद्वैयर्थ्यं । एवञ्च साकल्यव्यासज्यवृत्तित्वानन्तद्वयनिवेशपक्ष लाघ-वोक्ति । ) अतएव प्रतियोगिवैयधिकरण्यविशिष्टसाध्याभावघटितल-क्षणस्य तत्राव्याप्त्यभावादेव । नाना अनेका, व्यक्तिराश्रयो यस्येति, व्यु-त्पत्तयाश्रयः ।

गितानिवेशनैवोपपत्तौ व्यासज्यवृत्तित्वनिवेशो व्यर्थ इति चेन्न । व्यासज्यवृत्ति-त्वानिवेशे साध्यतावच्छेदकातिरिक्तत्वेन बहूनां धर्माणां निवेशे गौरवापत्तिरतो धर्मसङ्कोचार्थं तन्निवेश । यदि च साध्यतावच्छेदकातिरिक्तधर्मनिष्ठावच्छेद-कत्वाभिन्नपकत्वसामान्याभावनिवेशात् बहुधर्मनिवेशापत्तिरिति विभाव्यते, तदा घटकाभावसम्पादकत्वेन न व्यासज्यवृत्तित्वनिवेशवैयर्थ्यम् । नच व्यासज्यवृ-त्तित्वाघटितस्य लक्षणस्य सम्भवे तद्घटितगुरुलक्षणारम्भोऽन्याय्य इति वाच्यम् । साध्ये साकल्यस्य मूलोक्तस्य सार्थक्यायैव तद्घटितलक्षणादरात् । यत्तु व्यासज्य वृत्तित्व विहाय निरुक्तसामान्याभावनिवेशे प्रमेयवह्निमान् धूमादित्यादावगतिस्तत्र प्रमेयवह्नित्वस्य गुरुतयाऽनवच्छेदकत्वेन वह्निसामान्याभावस्यैव लक्षणघटकत्व सम्भव, तत्तु न घटते तद्धर्मप्रतियोगिताया साध्यतावच्छेदकातिरिक्तवह्नित्वा-वच्छिन्नत्वादिति तदसत् । गुरुधर्मावच्छिन्नसाध्यकहेतोर्दुष्टतावच्छेदकसम्बन्धा नुयोगिनिष्ठाभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकत्वलक्षणत्वेनाव्यभिचा रित्वेन तत्राव्याप्तेरिष्टत्वस्याग्रहदावेक्षितत्वात् । गुरुधर्मस्याभावप्रतियोगितानव च्छेदकत्वे तदवच्छिन्नसाध्यकानुमानमेव नास्तीत्यभिप्रायस्य वक्तुं शक्यत्वात् । अतएव लाघवेन साध्यतावच्छेदकावच्छिन्नाभावनिवेशोऽभिलषणीय इति स्मर्यते । अन्यथा तथात्वे गुरुधर्मावच्छिन्नसाध्यकाव्याप्तिपरिहाराय साध्यतावच्छेद कातिरिक्तत्वेन साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वावच्छिन्नत्वस्यैव निवेशनीयतया अप्रयोजकत्वादिति दिक् । तत्र लक्षणसङ्गतेरिति । अथ तत्र

1 मे पु म

अव्याप्यवृत्तिसाध्यकव्याप्यवृत्तिसद्धेतावव्याप्तेः । व्यभिचारिणि चाव्याप्यवृत्तावतिव्याप्तेर्वारणायाभावद्वये प्रतियोगिवैयधिकरण्यं बोध्यम् ।

---

अत एवाव्याप्तिरेवोक्ता नासंभवः । अत्रच नानाव्यक्तिसाध्यकत्वं व्यधिकरणद्वयवृत्तिसाध्यतावच्छेदककत्वम् । अतएव एत(द्वृक्षत्व)वृत्तियावद्धर्मवानेतत्वादित्यादौ नानाव्यक्तिसाध्यकेऽव्याप्तिविरहेऽपि न क्षतिः । अव्याप्यवृत्तीति । कपिसंयोगी एतद्वृक्षत्वादित्यादावित्यर्थः । अव्याप्तेर्वारणायेत्यन्वयः । व्यभिचारिणि चेति । एतद्वृक्षत्ववान्कपिसंयोगादित्यादावित्यर्थः । अभावद्वये साध्याभावे हेत्वभावे च । तथाचाव्याप्यवृत्तिसाध्यकव्याप्यवृत्तिसद्धेतावव्याप्तेर्वारणाय साध्याभावे व्यभिचारिणि चाव्याप्यवृत्तावतिव्याप्तेर्वारणाय

कृष्णंभट्टीयं ।

रपतया नानाधिकरणत्वलाभेऽपि, द्रव्यत्वसाध्यके सद्धेतावव्याप्त्यभावात् । साध्य एव नानात्वदाने शब्दवान् गगनत्वादित्यादौ, उभयत्रापि तद्दाने, सत्ता द्रव्यत्वपृथिवीत्वान्यतमवान्पृथिवीत्वादित्यादौ, तदभावस्यापच्छेदेनान्वयव्याघातः स्यादित्यत आह—व्यधिकरणद्वयेति । यत्किंचित्साध्यानधिकरणवृत्तित्वं साध्याधिकरणीभूतयत्किंचिद्व्यक्तयवृत्तित्वं वा । यदि व्यधिकरणद्वयवृत्तित्वं तदा शब्दवान् गगनत्वादित्यादौ नाव्याप्तिरत आह—एतद्वृत्तीति । नन्वेतद्दोषवारणाय व्यधिकरणद्वयवृत्तित्वं यत्किंचित्साध्यासमानाधिकरणवृत्तित्वमुच्यते तदोक्तान्यतमसाध्यकपृथिवीजलान्यतरत्वादिहेतुक एवोद्देश्यतावच्छेदकशून्ये विधेयसत्वान्न्यूनतेति चेत्तर्हीदृशरीतिं परित्यज्य हेत्वधिकरणयत्किंचिद्व्यक्तयवृत्तिरूपं साध्य एव नानात्वं निवेश्यम् । वस्तुतस्तु यत्किंचित्साध्यानधिकरणहेत्वधिकरणवृत्तिसाध्यवृत्तित्वमर्थ इति न कोऽपि दोषः । एतेन व्यधिकरणद्वयवृत्तित्वं चेद्यत्किंचित्साध्यानधिकरणवृत्तित्वं तदा द्रव्यत्वपृथिवीत्वसत्तान्यतमसाध्यकपृथिवीत्वादेः संग्रहापत्तिः । परस्परानधिकरणवृत्तित्वं परस्परानधिकरणवृत्तिपरस्परवृत्तित्वं चेत्तदा द्रव्यत्वपृथिवीत्वान्यतरवान्द्रव्यत्वादित्यादावव्याप्तिसंभवेन तदकथने न न्यूनतेति मन्युक्तम् ।

अत्रेदं बोध्यम् । नानाधिकरणसाध्यके इत्येव न्यायः । न चैवं सत्ता द्रव्यत्वपृथिवीत्वान्यतरवान्द्रव्यत्वादित्यादावव्याप्तिसंभवादसङ्गतिरिति वाच्यम् ।

---

१ पृथिवीकपिसंयोगात् इत्यादौ चेत्यर्थः इति का. पाठ.. २ यदि नानाव्यक्तित्वं. मै. पा. ३ वृत्तित्व इ. मै. पा. ४ इपताम् इ. मै. पा. ५ पृथिवीत्वाद्यन्यतमवान् इ. कचित्. पा.

हेत्वभावे प्रतियोगिवैयधिकरण्यमित्यर्थः । यद्यपि हेत्वभावे प्रतियोगिवैयधिकरण्यविशेषणस्यावश्यकतया कपिसंयोगी कपिविभागादित्याद्यव्याप्यवृत्तिहेतुकेऽप्यव्याप्तिवारणप्रयोजनकत्वं साध्याभावे तद्विशेषणस्य सम्भवतीति व्याप्यवृत्तीत्यकिञ्चित्करम् । तथापि हेत्वभावे तद्विशेषणप्रतिसन्धानं विनैव व्याप्यवृत्तिहेतुकस्थलेऽव्याप्तिनिर्णयो भवतीत्येतदभिसन्धायैव तदुक्तम् । प्रतियोगिवैयधिकरण्यं च न प्रतियोग्यधिकरणावृत्तित्वं । अव्याप्यवृत्तिसाध्यके तथाविधहेतुके च तादृशसाध्याभावहेत्वभावाप्रसिद्ध्याऽव्याप्तेः । अपितु प्रतियोग्यनधिकरणवृत्तित्वं । तथाच प्रतियोग्यनधिकरणवृत्तित्वविशिष्टसाध्याभावाधिकरणेषु यावत्सु प्रतियोग्यनधिकरणवृत्तित्वविशिष्टसम्वर्तते योऽभावस्तत्प्रतियोगित्वमर्थः । तेन कपिसंयोगी एतद्वृक्षत्वादित्यादौ कपिसंयोगाद्यनधिकरणगुणादिवृत्तित्वोपलक्षितकपिसंयोगाद्यभावस्य हेत्वधिकरणे सत्वेऽपि नाव्याप्तिः । नवा एतद्वृक्षत्ववान् कपिसंयोगादित्यादौ तथाविधकपिसंयोगाद्यभावस्य हेत्वधि-

कृष्णभट्टीय।

तदधिकरणवृत्तित्वविशिष्टसाध्याभावमादायाव्याप्तेः । एतेन पारस्परव्याप्यव्यापकभावानापन्नत्वं साध्यविशेषणमपि प्रत्युक्तं । रूपवान्पृथिवीत्वादित्यादौ रूपस्यापि रूपत्वव्यापकनानाधिकरणत्वस्याभावेऽपि नानाधिकरणवृत्तितावच्छेदकसाध्यताव च्छेदकस्थले तुल्ययोगाव्याप्तिः । द्रव्यं पृथिवीत्वादित्यादौ च विशिष्टाभावादिकमादायाव्याप्तिसम्भवात्तदाच्छेदेनान्ययव्याघात इति ।

एतद्वृक्षत्ववानिति । एतत्प्रयोजनं चिन्त्यम् । वृक्षवृत्त्येतत्त्वं वा साध्यतावच्छेदकम् । अत्र विशिष्टाधिकरणतानिवेशे गौरवम् । एवञ्च विशिष्टसत्ताया नातिरिक्तत्वे साध्याव्यवृत्तित्वव्यभिचारिण्यतिव्याप्तेरभिप्रेत आह—प्रतियोगीति । ननु [स्व]प्रतियोगित्वेन साध्योपादानं व्यर्थं साध्यानधिकरणत्वनिवेशे तु साध्याभावाधिकरणत्वं व्यर्थमिति चेन्न । इदानीं मूलानुरोधेन साध्याभावाधिकरणतायां स्वनिरूपकाभावीयस्य स्वावच्छेदकावच्छि

न्यायरत्न।

रूपघटोभयाभावस्य प्रतियोगिव्यधिकरणस्य समवायेनैवाव्याप्तिरिति चेन्न । घटत्वस्यैव तादृशाभावप्रतियोगितावच्छेदकत्वसम्भवात्तादृशोभयत्वावच्छिन्नप्रतियोगिताकाभावस्य गुरुधर्मावच्छिन्नप्रतियोगिताकतयाऽप्रसिद्धत्वाल्लाभावात् ।

१ साध्याभावाधिकरणे इति का पाठ २ साध्य २ मे पा ३ भावे दत्तया ३ मे पा

करणे सत्वेऽप्यतिव्याप्तिः । प्रतियोग्यनधिकरणीभूतसाध्याभावाधिकरणयावन्निष्ठस्वप्रतियोग्यनधिकरणताकाभावप्रतियोगित्वमिति फलितोऽर्थः । प्रथमे साध्यतावच्छेदकसंबन्धेन चरमे हेतुतावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणत्वं बोध्यम् । तेनायमात्मा आत्ममहाकालान्यतरत्वादित्यादौ व्यभिचारनिरूपकाधिकरणस्य कालस्य कालिकसंबन्धेन साध्याधिकरणत्वेऽपि नातिव्याप्तिः । नवा वह्निमान्धूमादित्यादौ साध्याभावाधिकरणयावदन्तर्गतकालज्ञानादिषु कालि-

कृष्णंभट्टीयं ।

कसामानाधिकरण्य–उभयसंबन्धेन प्रतियोगिताविशिष्टान्यत्वस्याभिप्रेतत्वेन घटाभावादिवारणाय साध्याभावनिवेशस्यावश्यकत्वात् । पश्चात्तु प्रकृतसाध्यानधिकरणत्वस्य स्वयमभिधानीयत्वादिति । यद्वा साध्यतावच्छेदकावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नानधिकरणेत्यभावाधिकरणान्तार्थः । साध्याभावनिष्ठप्रतियोग्यनधिकरणवृत्तितानिरूपकं यावत्तन्निष्ठस्वप्रतियोग्यनधिकरणवृत्तितानिरूपकताकाभावप्रतियोगित्वोक्तावगौरवमेव द्रष्टव्यम् । आत्मेति । नच साध्ये साकल्याप्रसिद्धिः । ज्ञानस्यैव साध्यत्वात् । [ [1] नैवं सर्वस्यापि विषयितासंबन्धेन ज्ञानवत्त्वाददोषः । जन्यज्ञानविशेषस्यैव साध्यत्वात् ] एवंच जन्यज्ञानरूपप्रतियोग्यनधिकरणे महाप्रलये कालात्मान्यतरत्वरूपहेतोः सत्त्वेनातिप्रसङ्गो नास्तीति । महेति । एतेनात्मत्वे साध्ये संबन्धसामान्येन प्रतियोग्यनधिकरणं गगनादिकमेव स्यात्तु महाप्रलयः । तथापि कालिकसंबन्धेनात्मत्वसत्त्वात् । तत्र च हेत्वभावरत्वं नातिप्रसङ्ग-

न्यायरत्नं ।

यद्वा साध्यवद्भिन्नवृत्तितावच्छेदकधर्मावच्छिन्नत्वाभावस्य साध्यनिष्ठप्रतियोगितामा निवेशे तत्र लक्षणसमन्वयसंभवादित्यभिप्रायः । **साध्याभावाधिकरणयावन्निष्ठस्वप्रतियोग्यनधिकरणताकाभावप्रतियोगित्वमिति फलितार्थ इति** । यद्यप्युक्तफलितार्थे हेत्वभावे सकलसाध्याभाववन्निष्ठत्वविशेषणाप्रवेशान्निर्धूमत्वव्याप्यत्वानिर्वह्नित्वादित्यादौ दीधितिकृता वक्ष्यमाणा व्याप्त्यसङ्गतिः । तथापि यथाश्रुताभिप्रायेण स्वप्रतियोग्यनधिकरणसाध्यावत्साध्याभाववन्निष्ठाभावप्रतियोगित्वमिति किंचित्परिष्काराभिप्रायेण वा वक्ष्यमाणा-व्याप्तिः सङ्गमनीया । **आत्ममहाकालेति** । अत्र महत्पदानुपादाने धूम-

१ आत्मत्वाधिकरणत्वेऽपि इति का. पाठः. २ यथाश्रुतस्यैव वा मै. पु. अधिकम्. ३ करणत्वं इ. मै. पा. ४ धानीयम्. इ. मै. पा. ५ वस्तुतस्तु. मै. पा. ६ मै. पु. अ.

**रणो बोध्यः । तत्प्रतियोगित्वं च हेतुतावच्छेदकरूपेण बोध्यम् । तेन द्रव्यत्वादौ साध्ये विशिष्टसत्वादौ नाव्याप्तिः । न वा विशिष्टसत्तात्वादिना तादृशाभावप्रतियोगिनि सत्वादावतिप्रसङ्गः ।**

---

भावपदोपादाने चाक्षराधिक्यमिति तन्नोक्तम् । **तत्प्रतियोगित्वं** साध्याभावनिष्ठाभावप्रतियोगित्वम् ॥ **हेतुतावच्छेदकरूपेण** हेतुतावच्छेदकावच्छिन्नमित्यर्थः । हेत्वभावनिष्ठप्रतियोगिवैयधिकरण्य-(शरीरे)स्वप्रतियोगितावच्छेदकावच्छिन्नत्वनिवेशनस्य प्रयोजनमाह—**द्रव्यत्वादाविति** । **विशिष्टेति** । गुणकर्मान्यत्वविशिष्टसत्तेत्यर्थः । **प्रतियोगितायां** (हेत्वभावप्रतियोगितायां) । हेतुतावच्छेदकावच्छिन्नत्वनिवेशनस्य फलमाह—**नवेति** । अत्रापि *द्रव्यत्वादौ* साध्ये इत्यनुषज्यते । **विशिष्टसत्तात्वादिना** गुणकर्मान्यत्वविशिष्टसत्तात्वादिना । तृतीयार्थश्च अवच्छिन्नप्रतियोगिताकत्वं तस्य चाभावेऽन्वयः । प्रतियोगिपदार्थैकदेशप्रतियोगितान्वितमवच्छिन्नत्वं वा तदर्थः । **तादृशाभावेति** । सकलसाध्याभाववन्निष्ठाभावेत्यर्थः । नच हेत्वभावे प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यनिवेशस्थले हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यमेव निवेश्यताम् । ततोऽपि तत्प्रयोजननिर्वाहात् । तथाच द्रव्यं सत्वादित्यादौ गुणादिनिष्ठविशिष्टसत्ताभावस्य हेतुतावच्छेदकावच्छिन्नसमानाधिकरणतयैवातिव्याप्तिवारणसंभवात्प्रतियोगितायां हेतुतावच्छेदकावच्छिन्नत्वनिवेशनमफलमिति वाच्यम् । हेत्वभावे हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशे सकलसाध्याभाववन्निष्ठाया हेतुतावच्छेद-

कृष्णंभट्टीयं ।

मत्वं वा द्रव्यत्वं तेन न साध्ये साकल्यासिद्धिः । **अवच्छिन्नेति** । अस्य प्रकारतया भानात् वह्नित्वेन नास्तीति न प्रत्ययः । द्वेधा प्रतियोगित्वमानासहिष्णुराह—**प्रतियोगीति** । **सकलेति** । सकलतन्निष्ठहेतुतावच्छेदकावच्छिन्नानधिकरणताकाभावप्रतियोगित्वं तु बहुव्रीह्यर्थसंबन्धासंभवान्नोक्तम् । **सकलेति** । यत्प्रत्येकतादृशपरिष्कारे निर्धूमत्वव्याप्यवान्निर्वह्निर्वादित्यादावव्याप्तिवारणासङ्गतिरिति सकलसाध्याभाववन्निष्ठहेतुतावच्छेदकावच्छिन्नप्रतियो-

यावच्छिन्नानधिकरणवृत्तित्वविशिष्टनिरूपिताधिकरणता तन्निरूपकाभाव(प्रतियोगित्व)वत्त्वमर्थः स्यात्तदपेक्षया सकलसाध्याभाववन्निष्ठा या हेतुतावच्छेदकावच्छिन्ना यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणता तद्धस्वरूपासदीयफलितार्थस्य धुत्वात् । नच ममापि सकलसाध्याभाववन्निष्ठं यद्धर्मावच्छिन्नानधिकरणत्वं तद्धर्मवत्त्वमित्येवार्थः । स चातिलघुरेवेति वाच्यम् । एतादृशार्थकरणे मूलोक्तं प्रतियोगितायां व्याप्तित्वं व्याहन्येतेति मूलानुसारेण दीधितिकृता गुर्वर्थानुसरणात् । उक्तविशेष्यविशेषणभावेन निवेशे व्यर्थविशेषणतानवकाशात् । केचित्तु हेतुतावच्छेदकावच्छिन्नवैयधिकरण्यनिवेशे सकलसाध्याभाववन्निष्ठविशिष्टसत्तात्वावच्छिन्नव्यधिकरणाभावप्रतियोगित्वरूपव्याप्तिविशिष्टवैशिष्ट्यज्ञानस्य गुणेऽपि सत्त्वात् बाधानवतारदशायां तत्र द्रव्यत्वानुमित्यापत्तिः । अस्मन्मते तु तत्प्रतियोगित्वं चेत्यतो लाघवस्य तादृशप्रतियोगितावच्छेदकहेतुतावच्छेदकस्य व्याप्तितया तद्विशिष्टवैशिष्ट्यावगाहिज्ञानस्य गुणेऽपि भ्रमत्वादित्याहुः ।

यत्रैकव्यक्तिकं साध्यं विपक्षो वा, तत्र निर्धूमत्वव्याप्ये,

---

[अथ चतुर्थलक्षणदूषणम्] । एतल्लक्षणं दूषयित्वा उत्तरलक्षणमवतारयति—**यत्रैकव्यक्तिकमिति** । यत्रैकव्यक्तिकं साध्यं तत्राव्याप्तिरित्यन्वयः । एतद्रूपवानेतद्घटादित्यादौ अव्याप्तिरित्यर्थः । अनेकाशेषत्वरूपसाकल्यस्य साध्येऽसत्वादिति भावः । साध्ये साकल्यविशेषणं परित्यज्य कल्पान्तरानुसरणान्न तद्दोषावकाश इत्यत आह—**विपक्षो वेति** । विपक्षः साध्याभाववान् । अत्राप्येकव्यक्तिक इत्यस्य विपरिणतस्यानुषङ्गः । तथाचैतद्घटभिन्नं पटत्वादित्यादौ साध्याभाववत्येतद्घटादौ साकल्याप्रसिध्याऽव्याप्तिरित्यर्थः । सकलपदस्याशेषमात्रपरत्वे दोषान्तरमाह—**निर्धूमत्वव्याप्य इति** । तत्वेन निर्धूमत्वव्याप्यत्वेन । तथाच धूमत्वावच्छिन्नाभावव्याप्यवान् वह्नित्वावच्छिन्नाभावादित्यादावित्यर्थः । निर्धूमत्वावच्छिन्ने साध्ये एक-

कृष्णंभट्टीयं ।

धिकरणशब्दजन्यबोधे तादृशबोधे च विषयः यद्धर्मावच्छिन्नानधिकरणशब्दजन्यबोधे च यद्धर्मशब्देन विशिष्टहेतुतावच्छेदकस्थले तस्योपादेयतया सामान्यवादिना न निषय इत्याशयेन विशिष्टाविशिष्टहेतुकस्थले विशेष्यविशेषणभावबोधोऽन्त्यसङ्गतेः ।

[अथ चतुर्थलक्षणदोषः] अनेकाशेषत्वं स्वसमानाधिकरणयावद्धर्मसमानाधिकरणानेकसाध्यवृत्तिसाध्यतावच्छेदकवत्त्वं । निर्धूमत्वव्याप्यत्वं धूमवदनुत्तित्वं । स्वरूपसंबन्ध. साध्यतावच्छेदक· अन्यथा व्यभिचारित्वं ।

व्याप्तित्वे व्याप्तेर्विशिष्टैकार्थरूपतानुपपत्तिरत. सकलसाध्याभाववन्निष्ठस्वावच्छेदकावच्छिन्नानधिकरणवृत्तित्वविशिष्टनिरूपिताधिकरणतानिरूपकाभावीयहेतुतावच्छेदकावच्छिन्नप्रतियोगित्वं व्याप्तिरित्येव वक्तव्यं । तथाच हेतुतावच्छेदकावच्छिन्नत्वांशेऽधिकरणनिवेशानुयोगो दुर्वार एवेति प्रतिभाति । तथापि सकलसाध्याभाववद्वृत्तिष्टभेदप्रतियोगितावच्छेदकतावच्छेदकहेतुतावच्छेदकावच्छिन्नत्वविशिष्टप्रतियोगित्वरूपकल्पितार्थे तात्पर्यानानुपपत्तिरित्यवधेयम् ।

[अथ चतुर्थलक्षणदोषः ।] अनेकाशेषत्वरूपसाकल्यस्येति । अनानेकत्वं व्यासज्यवृत्तिधर्मपर्याप्त्यधिकरणत्वम् । व्यासज्यवृत्तित्वं चैकत्व-

---

१ तत्र दोषा इति वा. पाठः. तत्रैनदोष इति मे. पाठः. २ शब्दस्य इति वा. पाठः.

तत्वेन साध्ये, निर्वह्नित्वादौ चाव्याप्तिः । तत्र हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वादत आह—साध्यवदिति।

---

व्यक्तिकतया पूर्वदोषाक्रान्तत्वेन तद्व्याप्यसाध्यकानुसरण । निर्धूमत्वव्याप्यस्य ह्रदादेस्तादृरूप्येण साध्यतायां सद्धेतुत्वानुपपत्तिरतस्तत्वेनेत्युक्तम् । हेत्वभावस्येति । अथ बहुत्वात्मकहेत्वभावस्य प्रत्येकं सकलसाध्याभाववन्निष्ठत्वासम्भवेऽपि सकलतन्निष्ठवह्न्यभावादिभेदप्रतियोगितामादायैव लक्षण सगमनीयम् । हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्यनिवेशादेव व्यभिचारिणि सम्बन्धान्तरावच्छिन्नप्रतियोगिताकहेत्वभावमादायातिप्रसङ्गानवकाशेन हेत्वभावप्रतियोगितायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशात् ।

यत्तु वह्निमद्भेदहेतुकाभिप्रायकोऽयं ग्रन्थः । भेदभेदस्यानवस्थाभयेनाधिकरणस्वरूपस्य स्वीकरणीयतया तथा तस्य च प्रत्येक विश्रान्ततया यावद्विपक्षवृत्तित्वसम्भवात्तत्र हेतुभेदमादायापि लक्षणगमनासम्भवादिति । तन्न । आकाशाभावाधिकरणकभेदभेदस्याकाशाद्यभावात्मकाधिकरणस्वरूपतया तस्य च यावद्विपक्षवृत्तित्वेन तमादायैव लक्षणगमनसम्भवात् । नचैतादृशरीत्या आकाशाभावमादाय भेदहेतुकव्यभिचारिण्यतिव्याप्तिप्रसक्त्या हेत्वभावत्वेन सकलसाध्याभावाधिकरणवृत्तित्व विवक्षणीयम् । तथासति अधिकरणस्वरूपाभावस्य स्वस्मिन्नेव तदभावत्वेन वृत्तिरिति नातिव्याप्त्यवकाशः । एवचाका-

कृष्णभट्टीय।

चारित्वापत्ति । व्यभिचारिणि आत्मभिन्न द्रव्यत्वादित्यादौ । भेदहेतुकेति । गुणवान्घटभेदादित्यादौ । स्वस्मिन्नेवेति । घटभेदादिरूपहेतुभेदत्वेन

न्यायरत्न।

यथा-यवच्छेदकधर्मावच्छिन्नापर्याप्तिकस्वरूपमेकत्वविरुद्धत्व स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकतातादात्म्यैतदुभयसम्बन्धेन किंचिद्धर्मविशिष्टत्व वेत्यन्यदेतत् । अश्वपत्व च समभिव्याहृतपदार्थतावच्छेदकधर्मव्यापकीभूतो योऽन्यत्वयासच्यवृत्तिधर्मभिन्नो धर्मस्तत्पर्याप्त्यधिकरणत्व बोध्यम् । भेदहेतुकेति । गुणवान्घटभेदादित्यादावित्यर्थः । स्वस्मिन्नेवेति । घटभेदह

१ नञ्त्वादे इति का पाठ २ स्वरूपस्य स्वीकरणीयतयेति मे पुस्तके अधिकम् ३ आकाशाभावस्वरूप इ मे पा

शाभावमादाय नोक्ताव्याप्तिपरिहारसंभव इति वाच्यम् । उक्तस्थले आकाशाभावस्य हेतुतावच्छेदकसंबन्धेन प्रतियोगिनैयधिकरण्यविरहादेवातिव्याप्तिवारणसंभवेन तादृशविवक्षायाः निष्प्रयोजनत्वात् । वह्निमद्भेदहेतुकस्थले च साध्याभावाधिकरणस्य हेतुरूपप्रतियोग्यनधिकरणत्वेनाकाशाभावरूपहेतुभेदस्य प्रतियोगिव्यधिकरणत्वेनाव्याप्तिवारणसंभवादिति ।

अत्र केचित् । यत्र वह्न्यभावान्यत्वविशिष्टनिर्धूमत्वव्याप्यं साध्यं वह्न्यभावान्यत्वविशिष्टवह्न्यभावो हेतुः । तत्र वह्न्यभावस्यापि सकलसाध्याभावान्तर्गततया तत्र वह्न्यभावभेदासत्वेन तमादाय लक्षणगमनासंभवात् । नच तादृशविशिष्टहेतुकस्थले हेतु( मत् )भेदस्य सकलसाध्याभाववन्निष्ठत्वासंभवेऽपि अखण्डस्य[1] विशिष्टात्यन्ताभावस्य तथात्वमादायैव लक्षणं संगमनीयमिति वाच्यम् । प्राचीनमते विशिष्टाभावस्य विशेषणाभावविशेष्याभावाभ्यामनतिरिक्ततया तादृशविशिष्टाभावस्य वह्न्यभावत्वतद्व्युभयरूपत्वेन सकलसाध्याभाववन्निष्ठत्वासंभवात् । अथैवमपि विषयितादिसंबन्धावच्छिन्नप्रतियोगिताकस्य वह्न्यभावात्यन्ताभावस्याखण्डतया सकलधूमवन्निष्ठतया तमादायैव लक्षणं संगमनीयमिति चेन्न । वृत्त्यनियामकतया विषयितादिसंबन्धानां अत्यन्ताभावप्रतियोगितानवच्छेदकत्वात् । संयोगादिरूपव्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभावा(त्यन्ता)भावस्याखण्डतया सकलधूमवन्निष्ठत्वेऽपि तदभावप्रतियोगिता न हेतुतावच्छेदकीभूतवह्न्य-

कृष्णंभट्टीय ।

गगनाभाव एव गगनाभावस्य वृत्तित्वमित्यर्थः । यदि हेतुभेदत्वेन गगनाभावस्य केवलान्वयित्व तदा घटभेदरूपहेतौ गगनाभावरूपहेतौ भेदसत्वेन घटभेदो न घटभेद इति प्रयोगापत्तिरित्यर्थः । हेत्वभावत्वेन हेतुतावच्छेदकावच्छिन्नयावद्प्रतियोगिताकाभावत्वेन । दीधितिकारोक्तस्थलेऽव्याप्त्युद्धारेऽप्यादिपदमात्रस्थलेऽव्याप्तिरिति वदतां मतं दूषयन्ति ।

अत्र केचिदिति । अथैवमपीत्यादि । वह्न्यभावात्यन्ताभावस्येति । वह्न्यभावान्यत्वविशिष्टवह्न्यभावात्यन्ताभावस्येत्यर्थः । अखण्डतया । अतिरिक्ततया न इयं विशिष्टाभावः । वैशिष्ट्यघटकसंबन्धानव-

[1] अखण्डस्य इति मं. पाठ.

भावत्वावच्छिन्ना । तत्र लाघवेनाभावत्वस्यैवावच्छेदकत्वादिति न तमादायापि लक्षणसङ्गतिः । ननु गुरुधर्मावच्छिन्नहेतुकस्थले लक्षणसमनाय पारिभाषिकमेवावच्छेदकत्वं हेतुतावच्छेदके निवेश्यम् । तथाच वह्न्यभावत्वादेरपि तादृशावच्छेदकत्वमक्षतमेवेति वाच्यम् । एतल्लक्षणस्य परित्याज्यतया निखिलदोषोद्धारानावश्यकत्वेन पारिभाषिकमवच्छेदकत्वं न निविष्टमित्यभिप्रायेणैव तद्दोषदानादिति वदन्ति ॥

कृष्णभट्टीय ।

च्छिन्नप्रतियोगिताकत्वात् । एवमुत्तरत्रापि । एतेनेयं शङ्का न दीधितिकारोक्तस्थले परास्ता । तत्र वह्न्यभावभेदमादायैव लक्षणसमन्वयोक्तेः विपक्षिता घनुधावनवैयर्थ्यादित्यपास्तम् । पारिभाषिकमेवेति । यद्यपि प्रतियोगितावच्छेदकातिरिक्तवृत्तित्वं न तत्, द्रव्यं सत्वादित्यादौ सत्तात्वस्य विशिष्टसत्ताभावप्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वादतिव्याप्तेः । एतेन हेतुतावच्छेदकसमानाधिकरणभेदप्रतियोगितानवच्छेदकधर्मानवच्छिन्नत्वं परास्तम् । नापि तदवच्छिन्नाभाववदसम्बद्धस्वविशिष्टसामान्यकत्वं । प्रकृतेऽभावत्वरूपतदवच्छिन्नाभावाप्रसिद्धेः । विपक्षनिष्ठाभावप्रतियोगिताघटकसम्बन्धेन तदवच्छिन्नाभावो न निवेशयितुं शक्यः । संयोगसम्बन्धावच्छिन्नप्रतियोगिताकस्य केवलान्वयित्वाद्वह्न्यभावत्वे तद्दौर्लभ्यात् । तथापि स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकताकत्वमेव तदवच्छेदकत्वं बोध्यम् । न चैव वह्निमान्धूमादित्यादौ संयोगावच्छिन्नहेत्वभावप्रतियोगितावच्छेदकधूमत्वादि समवायावच्छिन्नतादृशाभावप्रतियोगितावच्छेदकत्वादव्याप्तिः । प्रतियोगितयोरेकसम्बन्धावच्छिन्नत्वाच्च वह्न्यभावत्वे तद्दौर्लभ्यमक्षतमिति वाच्यम् । स्वविशिष्टाधिकरणस्य हेतुताघटकसम्बन्धेन प्रतियोग्यनधिकरणत्वेन विशेषणीयत्वादिति दिक् ॥ नन्वेवमपि हेत्वभावादेः प्रतियोगिवैयधिकरण्यस्य हेतुतावच्छेदकसम्बन्धेन निवेशात्तोक्तस्थलेऽव्याप्तिवारणमिति चेन्न । यादृशप्रतियोगिता यद्धर्मविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छिन्ना तद्धर्मावच्छिन्नानधिकरणत्वरूपप्रतियोगिवैयधिकरण्यनिवेशात् । नचैवं कर्मभिन्नत्वादित्यादावतिव्याप्तिः साध्याभाववत्सकलनिष्ठत्वे सम्बन्धविशेषावच्छिन्नत्वस्य निवेश्यत्वात्प्रतियोगितायाः पारिभाषिकं हेतुतावच्छेदकावच्छिन्नत्व परित्यज्य, यद्धर्मे हेतुव्यापकतावच्छेदकत्वं वा निवेश्यम् । तेन कर्मान्यत्व

न्यायरत्न ।

घटेतुभेदत्वेन गगनाभाव एव गगनाभावस्य वृत्तिमत्त्वमित्यर्थः । यदि च घटभेदभेदत्वेन गगनाभावस्य केवलान्वयिता तदा घटभेदो न घटभेद

१ अभावत्वरूपप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वाप्रसिद्ध मे पु भ

तदसत् । तथासत्यपि सकलसाध्याभाववन्निष्ठकालिकसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभावा(द्य)भावमादाय लक्षणसमन्वयसंभवात् । नच जन्यमात्रस्य कालोपाधितानये साध्याभाववति (पर्वतादौ) कालिकसम्बन्धेन वह्न्यभावा(दि)सत्त्वात्तत्र तत्संबन्धेन तस्याभावो न वर्त्तत एवेति वाच्यम् । कालिकसंबन्धेन तत्र वह्न्यभावसत्त्वेऽपि प्रतियोग्यनधिकरणीभूतवह्निमद्देशावच्छेदेन तत्र तत्संबन्धावच्छिन्नप्रतियोगिताकतदभावस्यापि सत्त्वात् । ( एवं विशिष्टाभावस्य विशेष्याभावविशेषणाभावाभ्यां अनतिरिक्तत्वे द्रव्यं विशिष्टसत्त्वादित्यादावेवाव्याप्तिसंभवे तदुपेक्षायां निर्बीजत्वाच्च ) । एतेन विशे-

कृष्णभट्टीय ।

विशिष्टसत्ताभावमादाय न दोष । तथा सत्यपीति । क्रियाप्रत्ययोरेव कालोपाधितापक्षे । सत्त्वादिति । नच कालिकसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभावभेदविशिष्टवह्न्यभावाभावस्याखण्डत्वेऽपि लाघवेन वह्न्यभावत्वमेव तत्प्रतियोगितावच्छेदकं स्यादिति वाच्यम् । तत्प्रतियोगितानिरूपकाभावविरोधितावच्छेदकत्वस्य तादृशाभावाधिकरणनिरूपितप्रतियोगिताघटकसंबन्धावच्छिन्ननिरवच्छिन्नाधेयतानवच्छेदकत्वरूपस्य प्रतियोगितासमनैयत्यघटकतया, विशिष्टसत्तात्ववत् विशिष्टवह्न्यभावत्वस्य प्रतियोगितावच्छेदकत्वात् । [ तत्र सत्तात्वस्य तादृशाधेयतावच्छेदकतया तदपेक्षया न गुरुत्वं विशिष्टसत्तात्वस्य । इहतु वह्न्यभावत्वस्यापि तादृशनिरवच्छिन्नाधेयतानवच्छेदकतया विशिष्टवह्न्यभावत्वस्य ततो गुरुत्वानपायादिति । नैवम् । तत्प्रतियोगिताश्रयवृत्तिषु विशिष्टानवच्छेदकावच्छिन्नाया अनवच्छेदकत्वस्य वाच्यत्वात् । स्वं गुरुधर्मं वह्न्यभावभेदविशिष्टवह्न्यभावत्वं तच्च वह्न्यभावावच्छेदेन वह्निमद्द्रव्यत्वावच्छेदेन चाधेयतानवच्छेदकम् । वह्न्यभावस्य महाकालेऽपि तद्विशिष्टसत्तानवच्छेदकत्वात् । केवलवह्न्यभावत्वं तु वह्न्यभावत्वेन तथाविधमहाकालवृत्तितावच्छेदकमेवेति विशेषात् । ] ननु तत्र वह्न्यभावभेदासत्त्वेनेति पूर्वग्रन्थे वह्न्यभावभेदविशिष्टवह्न्यभावभेदासत्त्वेनेति व्याख्यानं न युज्यते । गुरुतया तादृशवह्न्यभावत्वस्य भेदप्रतियोगि-

न्यायरत्न ।

इति प्रयोगापत्तिरिति ध्येयम् । कालिकसंबन्धावच्छिन्नप्रतियोगिताकवह्न्यभावमादायेति । अत्र वह्न्यभावपदं वह्न्यभावान्यत्वविशिष्टवह्न्यभा-

---

१ वह्निमद्द्रव्यत्वा इति का. पाठ　२ तदुपेक्ष्याभावसाध्याभावहेतुकस्थलानुधावने इति का पा　३ एतेनेत्यादि संभवादित्यन्तम् का. पुस्तके न दृश्यते　४ लक्षणप्रदिसाये इति मै पाठ　५ अवैतमरि. मै. पा. [] एतदन्तर्गत बा प्र ना.

पगताविशेषेण सम्बन्धेन वृत्तिघटितसामानाधिकरण्यसम्बन्धावच्छिन्न-प्रतियोगिताकधूमाभावव्याप्यत्वात् तादृशसामानाधिकरण्यसम्बन्धाव-च्छिन्नप्रतियोगिताकवह्न्यभावादित्येतत्परम् । तत्र धूमसामानाधिकर-ण्यरूपस्य सकलसाध्याभावस्याधिकरण हेतुरपि । तस्य धूमाधिकरणे सत्त्वात् । तत्र च हेतुभेदमादायापि न लक्षणसमन्वयसम्भवः । अत्य-

कृष्णभट्टीय ।

तानवच्छेदकत्वात् । द्रव्यं सत्त्वादित्यादौ विशिष्टसत्ताभावस्य विशेष्यविशेषणभावरूपतामते सकलसाध्याभाववन्निष्ठस्वाभावेनातिव्याप्तिविरहाद्धेतुताव-च्छेदकावच्छिन्नत्वं प्रतियोगिताविशेषणं नोपादेयम् । एतदभिप्रायेणैव वह्न्य-भावाभेदतदभावो कीर्तनमस्त्विति चेन्न । तत्प्रतियोगिता न हेतुतावच्छेद-कीभूतवह्न्यभावत्वावच्छिन्नेति ग्रन्थविरोधात् । तस्माद्वह्निमान्द्रव्यादित्यादौ साध्याभाववत्सकलनिष्ठधूमाभावमादायातिव्याप्तिवारणाय हेतुतावच्छेदकध-र्मावच्छिन्नत्वमावश्यकं वाच्यम् । वह्न्यभावभेदासत्त्वेनेति ग्रन्थश्च गुरुधर्मस्य प्रतियोगितानवच्छेदकमते वह्न्यभावान्यत्वविशिष्टवह्न्यभावभेदप्रमित्येत-र्थक । एवञ्च कालिकसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावभेदविशिष्टव-ह्न्यभावाभावस्थले गुरोरपि तादृशाभावस्य प्रतियोगितावच्छेदकत्वं निष्प्र-त्यूहम् । ननु कालिकसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावान्यत्वविशिष्ट-वह्न्यभावाभावकालिकसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्यभावाभावयोः स-मनियतत्वेनैक्या केवलवह्न्यभावत्वस्यैव तत्प्रतियोगितावच्छेदकत्वम् । ननु विशिष्टवह्न्यभावत्वस्येति प्रतियोगितायां हेतुतावच्छेदकावच्छिन्नत्वाभावेना-व्याप्तिरदत्तस्यैवेति चेन्न । तत्र तेन सम्बन्धेन हेत्वभावस्य वह्न्यभावोऽप्यव-च्छेदकः । तेन सम्बन्धेन वह्न्यभावाभावस्य तु तेन सम्बन्धेन वह्निमद्भेद-रूपेति अवच्छेदकभेदेनैव तयोर्भेदात् । अन्यथा कपिसंयोगाभाववपिपीलिका-संयोगाभावयोरप्यैक्यापत्तेरिति । एवं विशिष्टाभावस्य विशेष्याभावविशेष-णाभावाभ्यामनतिरिक्तत्वे द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिसम्भवात्तदुपे-क्षाया निर्बीजत्वादिति । यद्यपि सत्ताया विशिष्टसत्ताभेदासत्त्वेन तमादाय लक्षणसमन्वयो नास्ति । सकलान्तर्गते साध्याभाववति नियमेन सहजतत्र जन्ये च प्रतियोग्यनधिकरणावच्छेदेन कालिकसम्बन्धावच्छिन्नहेत्वभावसत्त्वेन अव्या-प्त्युद्धारसम्भवात् । तथापि भट्टाचार्यैर्लिखितत्वात्तथा बोध्या । एतद्दीधितिग्रन्था-त्कथञ्चिदपि तादृशसाध्यादेरलाभ इति तत्त्याग । हेतौ साध्याभाववत्ता-सम्पत्त्यै विशेषणताविशेषेणेति । **रूपस्येति** । तत्सम्बन्धावच्छिन्नप्रतियोगि-ताकमाभावस्य तत्सम्बन्धरूप इत्याशयेनेदम् । तस्य सामानाधिकरण्यसम्ब-

---

[१] तस्मात् इ मै पु अधिकम् २ एवमित्यादि ऐक्यापत्तेरिति पर्यन्त मै पु पृष्ठ एव वर्तन ३ नच इ मै पा ४ यथम् इ मै पु अ ५ इति पाठ्य मै पाठ

न्ताभावमादाय तदसम्भवो दर्शितरीत्यावसेयः । इत्थंच विशिष्टाभावस्य विशेष्याभावविशेषणाभावाभ्यामनतिरिक्तत्वेऽपि न दोषासंगतिरिति परास्तम् । तत्रापि कालिकसम्बन्धावच्छिन्नाभावमादाय दोषवारणसंभवात् । तस्मात्प्रतियोगितावच्छेदकसम्बन्धेनैव प्रतियोगिवैयधिकरण्यं निविष्टं । प्रतियोगिता च हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वेनैव निविष्टेत्यभिप्रायेणैव तदुपादानं । हेतुतावच्छेदकसम्बन्धेन प्रतियोगिवैयधिकरण्योपादाने तु अग्रिमलक्षणापेक्षया गौरवमेवेति लक्षणान्तरावतारे बीजं बोध्यं । *एतेन सकलशब्दस्य व्यापकत्वार्थकतया* साध्याभावव्यापकीभूताभावप्रतियोगित्वमेव निष्कृष्टैतल्लक्षणार्थः।धूमवान्वह्नेरित्यादौ *प्रमेयत्वादिना वह्न्यभावस्य साध्याभावव्यापकत्वे(पि)* न क्षतिः।यद्रूपावच्छिन्नप्रतियोगिताकाभावत्वं साध्याभावव्यापकतावच्छेदकं तद्रूपत्वस्यैव लक्षणत्वात्।एवंच हेत्वभावे प्रतियोगिवैयधिकरण्यं

कृष्णभट्टीय ।

न्धेन वह्न्यभावरूपहेतौ । दर्शितेति । हेत्वभावस्य सामानाधिकरण्येन वह्निरूपस्य तत्सामानाधिकरण्यरूपत्वेन नानात्वात् । कालिकेति । एवं पर्यन्तवृत्तिरूपध्वंसादौ कालिकसम्बन्धेन हेतौ सत्त्वेऽपि तदनधिकरणघटात्यन्ताभावावच्छेदेन तदभावोऽपि बोध्य । ननु साकल्य समभिव्याहृतपदार्थतावच्छेदकनिष्ठव्याप्तिनिरूपकत्व समभिव्याहृतपदार्थान्वयिसकलशब्दोत्तरवृत्तिशब्दोपमन्वानात् । साध्याभावाधिकरणावृत्तित्व[त्व]भावकत्वं निर्गलितार्थ । तत्र च वह्न्यभाववति कालिकसंबन्धेन वा वृत्तिमनिवेशो सत्तावान् जातेरित्यादौ तदप्रसिद्धि । द्रव्यभिन्न विशिष्टसत्त्वादित्यादौ हेत्वभावाभावे सत्त्वादौ तादृशद्रव्यवृत्ति च [ एवं स्वाभावाधिकरणावृत्तिसाध्याभावत्वोक्तौ च सत्ताभाववान् जात्यभावादित्यादौ च हेत्वभावाभावे स्वाभावाधिकरणे साध्यवत्तामहविरोधितानियामकसमवायेन वृत्त्यप्रसिध्यादिकम् ] चेत्यत आह—व्यापकतेति । एवंचेति । ननु सत्तावान् जातिमद्वृत्तित्व-

न्यायरत्न ।

वपरे तेन प्रतियोगितायां हेतुतावच्छेदकावच्छिन्नत्वविशेषणत्वेऽपि न क्षति । *तादृशविशिष्टवह्न्यभावाभावप्रतियोगितायां वह्न्यभावत्वेनावच्छेदकत्वभङ्गस्तु* न शङ्क्य । तथा सति तादृशविशिष्टाभावस्य वह्न्यभावरूपदेशावच्छेदेन कालवृत्तित्वानुपपत्ते । प्रतियोगितावच्छेदकावच्छिन्नानधिकरणदेशस्यैव कालवृत्तितावच्छेदकत्वादिति ध्येयम् । सकलशब्दस्य व्यापकत्वार्थकतयेति ।

१ मै पु. अधिकम्

न निवेश्यते। व्यापकतालक्षणे प्रतियोगिवैयधिकरण्यानिवेशेनान्या-
प्यवृत्तिहेतुकाव्यभिचारिणि हेत्वभावस्य साध्याभाववन्निष्ठहेतुरूपाभा-
वप्रतियोगितया व्यापकत्वाभावेनातिप्रसङ्गविरहात्। व्यापकताशरीरे
च हेतुतावच्छेदकसम्बन्धेन साध्याभाववन्निष्ठत्वमभावे निवेश्यम्।
तेन पक्ष्यभाव(आदि)वति कालिकसम्बन्धेन धूमादिरूपाभावस्य वृ-
त्तावपि धूमाभावादेर्न साध्याभावव्यापकताक्षतिः। सत्तावान् जाते-
रित्यादौ साध्याभाववति हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्ध्याऽ-
व्याप्तिस्तु लक्षणपञ्चक एव दोषः।

कृष्णभट्टीय।

विशिष्टाभावादित्यादौ हेत्वभावस्य च कालिकसम्बन्धावच्छिन्नाभावत्वस्य
प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणस्य साध्याभाववति हेतु-
तावच्छेदकीभूतदैशिकविशेषणतासम्बन्धेन साक्षाद्व्याप्तिरतो व्यापकतायां
प्रतियोगिवैयधिकरण्य निवेश्यमिति हेत्वभावे तदावश्यकमिति चेन्न। लाघ-
वेन हेतुमत्ताग्रहविरोधितानियामकसम्बन्धावच्छिन्नप्रतियोगिताविवक्षणात्।
अन्यथा हेतुमत्ताग्रहविरोधितानियामकसम्बन्धेन प्रतियोगिवैयधिकरण्यस्या-
वश्यकतया गौरवात्। दोष इति। एतेन तद्दोषस्यानुद्भावनीयत्वमुक्तं।
केवलान्वयिन्यभावादिति मूले, केवलान्वयित्वं हेतुतावच्छेदकसम्ब-
न्धेन यत्किञ्चित्पदार्थाधिकरणवृत्त्यभावप्रतियोगित्वं च्यवत्वमभिप्रेतमतो न
न्यूनतेति भावः।

अत्र केचित्। साध्याभावव्यापकतावच्छेदकत्वं हेतुतावच्छेदकसम्ब-
न्धावच्छिन्नाधेयतावद्भावीयप्रतियोगितावच्छेदकत्वसम्बन्धेन साध्याभावा-
वच्छिन्नप्रतियोगिताकाभाववत्त्व। उक्तस्थले च सामान्यादौ तादृशवृत्तत्वप्रसि-
द्धावपि द्रव्यत्वादेः प्रसिद्धेन निरुक्तसम्बन्धेन व्यधिकरणेन सत्ताभावावच्छिन्न-
प्रतियोगिताकाभावस्य जात्यभावे सत्त्वात्साव्याप्तिरित्याहुः। तन्न तादृशप-
रम्परायाः प्रतियोगितावच्छेदकसम्बन्धत्वे मानाभावात्। परेतु यद्रूपावच्छि-
न्नप्रतियोगिताकाभावत्वं स्वावच्छिन्नप्रतियोगिताकाभाववद्वृत्तिसाध्याभा-
वाधिकरणताकं तद्रूपवत्त्वं व्याप्तिरिति निष्कर्षः। उक्तस्थले च साध्याभावा-
धिकरणतायाः जात्यभावत्वावच्छिन्नप्रतियोगिताकाभाववृत्त्यवृत्तेर्नाव्याप्तिरि-
त्याहुः। तत्तुच्छ। यद्रूपावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रतियोगिता-
काभावाधिकरणवृत्तित्वाभावीयप्रतियोगितायाः तादृशवृत्तित्वस्य हेत्वधिकर-
णवृत्तित्वापेक्षया गौरवेणानवच्छेदकतया तथा निर्वक्तुमसम्भवात्। न च
निरुक्तवृत्तित्वस्य गौरवेणानवच्छेदकत्वेऽपि स्वनिरूपकतावच्छेदकत्वोप-

१ अभिन्नाधिक्रिति मै धा २ साम्प्रदायिकेति मै पा

कृष्णभट्टीय ।

लक्षितधर्मावच्छिन्नाधिकरणवृत्तित्वावच्छिन्नप्रतियोगिताकाभाववत्साध्याभावाधिकरणताकत्वं साध्यव्यापकतावच्छेदकत्वम् । अथवा स्वावच्छिन्नप्रतियोगिताकाभावानधिकरणनिरूपिता या वृत्तिता तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटवत्साध्याभावाधिकरणताकत्वं तत् । तेन प्रतियोगितावच्छेदककोटौ उपलक्षणविधया भानानुपगमेऽपि न क्षतिरिति वाच्यम् । एतद्धर्मस्य स्वाधिकरणावृत्तिसाध्याभावकूटपर्यन्तस्यायितया किं न रोचयेदित्यनुयोगस्य निष्परिहरत्वात् । यत्तु साध्याभावसामानाधिकरण्यं हेतुतावच्छेदकस्वरूपान्यतरसम्बन्धेन वाच्यम् । तेन सत्तावान् जातेरित्यादौ न दोष इति । तदसत् । अन्यतरत्वेन संसर्गत्वानुपगमात् । उपगमेऽपि वा पर्वतो वह्निमान्पर्वतानुयोगिकत्वविशिष्टकालिकसम्बन्धेन पर्वतत्वाभावादित्यादौ हेतुतावच्छेदकस्वरूपसम्बन्धान्यतरात्मकस्वरूपसम्बन्धेन पर्वतत्वाभावात्मकाभावस्य साध्याभाववद्ध्रदादिवृत्तित्वाद्व्यापकत्वानुपपत्तेः । विशेषरूपेण संसर्गतानुपगमेऽपि महाकालान्यत्वविशिष्टनित्यत्वाभावात्मककालिकसम्बन्धेनाकाशाभावादित्यादौ हेत्वभावाभावस्याकाशाभावस्य साध्याभाववति नित्ये स्वरूपसम्बन्धेन सत्त्वादव्याप्तेः । साध्याभाववद्वृत्तितावच्छेदकप्रतियोगिताभिवेशे न कोऽपि दोष इति बोध्यम् । यत्तु प्रतियोगिव्यधिकरण्यविशिष्टसाध्याभाववद्यत्किंचिद्वृत्तितानवच्छेदकान्यधर्मेण साध्याभावव्यापकतावच्छेदकत्वं धूमवान्वह्नेरित्यादावतिव्याप्तिवारणाय यत्किंचिदिति । कपिसंयोगादिसाध्यकस्थहाय प्रतियोगिवैयधिकरण्यम् । वृत्तित्वं च स्वरूपसम्बन्धेनेति तत्तुच्छम् । सत्ताभाववान् जात्यभावादित्यादौ जातीनां स्वरूपसम्बन्धेनासत्त्वेन हेत्वभावस्य तादृशवृत्तित्वानवच्छेदकत्वेनाव्याप्तेः । यत्तु वह्निमान् शैवालादित्यादौ व्यभिचारे शैवालाभावस्य प्रतियोगिवैयधिकरण्यविशिष्टवह्न्यभावाधिकरणयत्किंचिद्व्यक्त्यात्मकभूतलवृत्तितावच्छेदकतया तादृशवृत्तितानवच्छेदकगगनत्वाव्यत्वादतिव्याप्तिरिति । तदशुद्धमेव । तथाविधशैवालाधिकरणवृत्तितानवच्छेदकत्वसत्त्वात् । महाकालान्यत्वविशिष्टनित्यत्वे साध्ये कालिकसम्बन्धावच्छिन्नघटत्वाभावस्तु व्यभिचारीति न दोषलेशोऽपीति । ननु साध्याभाववदवृत्तित्वादिलक्षणेषु साध्याभाववदवृत्तित्वादिकं न सम्बन्धसामान्येन, प्रसिद्धानुमान एव गतत्वात् । नापि यत्किंचित्सम्बन्धेन, निर्धूमसमवेतत्वाभावमादायातिव्याप्तेः । नापि स्वरूपहेतुतावच्छेदकान्यतरसम्बन्धेन, अन्यतरत्वेन संसर्गत्वानुपगमात् । तदुपगमेऽप्यात्मभिन्न घटाभावादित्यादौ कालिकसम्बन्धेन हेतौ साध्याभाववति स्वरूपसम्बन्धेन हेतो सत्त्वादव्याप्तेः । यत्तु तादृशवृत्तित्वाभाव एव हेतुतावच्छेदकावच्छिन्नाधिकरणतानिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नवृत्तितानीयस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्व विशेषणम् । ननु वृत्तित्वेऽपि

---

१ तथैव मे

कृष्णभट्टीय ।

स्वरूपसम्बन्धनिवेश इति न कोऽपि दोष इति । तद्विशेषरूपेण संसर्गतानवच्छेदकीभूतविशेषणत्वत्वेन धर्मानामेव निवेशः । तस्माद्धेतुतावच्छेदकसम्बन्धान्यहेतुप्रतियोगिकसम्बन्धान्यसम्बन्धावच्छिन्नस्य तादृशहेतुप्रतियोगिकसम्बन्धावच्छिन्नस्य वा वृत्तित्वे विशेषणम् । तथाच सत्तावान् जातेरित्यादौ तथाविधस्वरूपसम्बन्धावच्छिन्नवृत्तित्वसत्त्वान्नाव्याप्तिः । अथात्रापि प्रमेयवान् प्रमेयादित्यादौ कालिकसम्बन्धेन हेतुताया हेतुतावच्छेदको यः कालिकसम्बन्धः तदन्यप्रमेयप्रतियोगिकसम्बन्धो यत्किञ्चित् कालिकसम्बन्ध एवेति तदवच्छिन्नसाध्याभावाधिकरणीभूतावृत्तित्वाप्रसिद्ध्याऽव्याप्तिः । एवं सत्तावान् प्रमेयादित्यादौ समवायेन विषयितया च हेतावपि समवायादेव तादृशसम्बन्धत्वाद्धेतुप्रतियोगिकत्वघटकहेतौ हेतुतावच्छेदकसम्बन्धेन सम्बन्धित्वं निरर्थकम् । उक्तहेतुष्वव्याप्त्यनुद्धारात् । अथ साध्याभाववदवृत्तित्वादेर्यद्धर्मावच्छिन्नानुयोगिताकत्वं तद्धर्मावच्छिन्नप्रतियोगिकत्वं हेतुप्रतियोगिकत्वस्यार्थः । दर्शितस्थले चावृत्तित्वसत्त्वादिरेव तथाविधो धर्मः धूमवान् वह्नेरित्यादौ चार्द्रेन्धनप्रभववह्नित्वादेस्तादृशधर्मत्वेऽपि न क्षतिरिति चेन्न । आत्मवृत्तित्वावच्छिन्नप्रतियोगिताकान्यत्वस्य कथञ्चित् स्वरूपसम्बन्धे सत्त्वेऽप्यव्याप्त्यनुद्धारादिति चेन्न । यथा समवायसम्बन्धावच्छिन्नप्रमेयाभावाभावत्वं सत्तायामेवोपेयते । एवं कालिकसम्बन्धावच्छिन्नप्रमेयाभावाभावत्वं [ कालमात्रवृत्तिधर्मे विषयितासम्बन्धावच्छिन्नप्रमेयाभावाभावत्वञ्च ] विषयितायामेव । तथाच हेतुप्रतियोगिकत्वं हेत्वभावाभावत्वावच्छिन्नप्रतियोगिताकत्वमेवेति न कोऽपि दोषः । एवमस्मन्मते समवायतद्विशेषोभयसम्बन्धेन कालवृत्तित्वविशिष्टप्रमेयादिमानित्यादौ हेतुतावच्छेदकसम्बन्धान्यसम्बन्धाप्रसिद्धिरप्यपास्ता । नचैवमुक्तस्थलेऽव्याप्तितादवस्थ्यमेव । धूमवान् वह्नेरित्यादावतिव्याप्तिवारणार्थं हेतुतावच्छेदकावच्छिन्नानुयोगिताकत्वस्य साध्याभाववदवृत्तित्वे आवश्यकतया तथाविधसमवायसम्बन्धावच्छिन्नवृत्तित्वाभावस्य तादृशानुयोगिताकत्वाभावादिति वाच्यम् । हेतुतावच्छेदकावच्छिन्नानुयोगिताकत्वस्य तदवच्छिन्नव्यापकत्वानवच्छेदकावच्छिन्नानुयोगिताकत्वरूपत्वात् । अथवा केवलान्वयित्वमन्योन्याभावप्रतियोगितानवच्छेदकहेतुतावच्छेदकत्वमत्यन्ताभावप्रतियोगितानवच्छेदकत्वान्यतरवमीदृशस्थले व्याप्तिर्मूललक्षणेनैवेति । यद्यपि साकल्यलक्षणेऽपि हेतुतावच्छेदकसम्बन्धान्यहेतुप्रतियोगिकसम्बन्धानवच्छिन्नं साध्याभाववदवृत्तित्वं निवेशयितुं शक्यम् । [ [3]नचैवं वह्निमान् संयोगेन रूपादित्यादावतिव्याप्तिः हेतुतावच्छेदकसम्बन्धेन तन्निवेशितसाध्याभावात् । एवञ्च हेत्वभावादौ प्रतियोगिवैयधिकरण्यनिवेशेऽपि सत्तावान् द्रव्यत्वादित्यादौ न दोष इत्यालोच्य तत्र तादृशसम्बन्धनिवेशो आवश्यकः हेत्वभावे प्रतियोगिवैयधिकरण्यं परित्यज्य

[1] मै पु भ [2] तथाच इ मं पा [3] द मै पु अ पा

अस्तु वा हेतुतावच्छेदकसंबन्धेन हेतुमत्ताज्ञानं प्रति यादृशसंबन्धेन हेत्वभाववत्ताग्रहप्रतिबन्धकः तादृशसंबन्धेन स्वावच्छिन्नाधिकरणभिन्नसाध्याभावाधिकरणकं यद्यत्स्वं तद्भिन्नत्वमेव सा-

कृष्णभट्टीयं।

निराकृत्य व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यं स्वावच्छिन्नानधिकरणत्वरूपं साध्याभाववति निवेश्ये तद्वृत्त्यभावप्रतियोगित्ववैयर्थ्यात्परित्यज्य निष्कर्षमाह—अस्तु वेति ] तथापि हेत्वभावे प्रतियोगिवैयधिकरण्यनिवेशानुरोधेनाह—अस्तु वेति। व्यापकताघटकाभावे प्रतियोगिवैयधिकरण्यं च स्वावच्छिन्नानधिकरणत्वमेव साध्याभाववति तद्वृत्त्यभावप्रतियोगित्वं वैयर्थ्यात्परित्यज्यायं निष्कर्षः कृत। हेतुतावच्छेदकसंबन्धेन हेतुमत्ताग्रहविरोधितासंबन्धेन साध्याभावव्यापकतायाऽवच्छेदकत्व यद्धर्मावच्छिन्नाभावाधिकरणतात्वं तद्धर्मवत्त्वमित्युक्तौ यद्यपि दोषाभावस्तथापि अस्तुवेत्यादिना गुर्वर्थानुसरणं परमतनिरासार्थमेवेति बोध्यम्। हेतुतावच्छेदकसंबन्धेनेत्यस्यानुपादाने तत्संबन्धभिन्नकालिकसंबन्धावच्छिन्नप्रतियोगिताकद्रव्यत्वाभावादिसाध्यके कालिकसंबन्धेन व्यभिचारिण्यतिव्याप्तिः कालिकसंबन्धस्य स्वरूपसंबन्धेन हेतुमत्ताग्रहविरोधितानियामकतया न कालिकसंबन्धेन स्वावच्छिन्नानधिकरणत्वस्य व्यभिचारनिरूपकाधिकरणीभूततत्संबन्धासमानकालीनपदार्थमादायैवोपपादनीयत्वात्।

अथवा अयमात्मा कालिकसंबन्धावच्छिन्नप्रतियोगिताकाकाशाभाववानित्यादौ स्वरूपसंबन्धेन व्यभिचारिणि स्वरूपसंबन्धस्यापि यत्किंचित्संबन्धेन हेतुमत्ताग्रहविरोधितानियामकतया तेन स्वरूपसंबन्धेन स्वावच्छिन्नानधिकरणत्वं गगनाभावमादाय न संभवतीति गगनाभावत्वादिकं स्वपदेनोपादाय तदवच्छिन्नानधिकरणं साध्याभावाधिकरणं यत्किंचित्तद्भिन्नत्वस्य हेत्वभावे सत्त्वादतिव्याप्तिरतो हेतुतावच्छेदकसंबन्धेनेत्युक्तम्। अथवा हेतुमत्ताग्रहविरोधित्वं तादृशग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं चेत्तदात्मकत्वरूपसाध्यके व्यभिचारिणि आत्मा हेतुमान्पर्वतश्च घटवानिति समूहालम्बनरूपं हेतुमत्ताग्रहमादाय पर्वतो घटाभाववानिति प्रतिबन्धकीभूतग्रहविषयीभूतस्वरूपसंबन्धेन गगनाभावत्वावच्छिन्नानधिकरणकान्यत्वस्य हेत्वभावे सत्त्वादतिव्याप्तिः। हेतुमत्ताग्रहस्यावच्छिन्नत्वनिवेशेऽप्यवच्छेदकस्वपर्याप्तिनिवेशोऽसम्भवः। तन्निवेशे यत्किंचित्संबन्धेन हेतुमत्ताग्रहमादायोक्तदोषसत्त्वादवच्छिन्नत्वं व्यापकत्वघटकं वाच्यम्। एवञ्च निखिलसंबन्धेन हेतुमत्ताग्रहव्यापिका न कापि प्रतिबध्यतेति हेतुतावच्छेदकसंबन्धेनेत्युक्तम्। तच्च तन्निवेशेऽपि विभिन्नधर्मितावच्छेदकहेतुमत्ताग्रहमादाय व्यापकत्वभङ्ग एवेति वाच्यम्। तेन संबन्धेन यत्किंचिद्धर्मावच्छिन्नधर्मिकहेतुमत्ताग्रहव्यापकत्वस्य निवेशनीयत्वात्। आत्मघटान्यतरवृत्तिधर्मवान् कालिकसंबन्धावच्छिन्नात्मत्वाभावसमवायसमवायसंबन्धावच्छिन्नात्मत्वाभावोभयसाद्व्यादौ वि-

ध्याभाववद्व्यापकतावच्छेदकत्वम् । इत्थञ्च सत्तावान् जातेरित्यादौ वैतादृशस्य जातित्वाभावत्वादिकमेव तद्भिन्नञ्च जात्यभावत्वादिकमिति लक्षणसमन्वयः । इत्थञ्च एतद्वृक्षत्ववान् कपिसंयोगादित्यादौ कपिसंयोगाभावत्वावच्छिन्नानधिकरणत्वाप्रसिद्ध्या कपिसंयोगाभावत्वं नैतादृशस्य इति कपिसंयोगाभावत्वस्य साध्याभावव्यापकतावच्छेदकत्वादतिव्याप्तिवारणाय हेत्वभावे प्रतियोगिवैयधिकरण्यं विशेषणं देयमेव । न देयमेव वा अधिकरणत्वाभा-

कृष्णभट्टीय ।

पक्षस्यात्मनो हेतुमत्ताग्रहविरोधितानियामकीभूतकालिकसम्बन्धेन हेत्वभावानधिकरणतया व्याप्तिः स्यादतो हेतुतावच्छेदकधर्मवैशिष्ट्यं निवेश्य । घटवान् धूमाभाववानयञ्च घटवानिति कालिकसम्बन्धावच्छेदकधर्मदर्शनस्य प्रतिबन्धकतया तादृशकालिकसम्बन्धमादायाव्याप्तिरतो हेत्वभावनिवेशः । नचैवमपि धूमाभाववान् धूमाभाववानयञ्च धूमाभाववानिति कालिकसम्बन्धावच्छेदकधर्मदर्शनस्य प्रतिबन्धकत्वात्तद्विषयकालिकसम्बन्धमादायाव्याप्तिर्दुर्वारैवेति वाच्यम् । तत्पदेन वैशिष्ट्यार्थ उक्तप्रतिबन्धकताया [illegible]नात् । अभावहेतुकव्यभिचारिण्यतिव्याप्तिर्विशेषणतासम्बन्धापेक्षा । **देयमेवेति** । तथाच स्वप्रतियोग्यनधिकरणं यत् स्वावच्छिन्नाधिकरणं तद्भिन्नं यत् साध्याभावाधिकरणं यत्किञ्चित्तत्कं यत् स तद्भिन्नत्वमित्यर्थः । नन्वेवमेतद्वृक्षत्ववान् कपिसंयोगाभावादित्यादौ संयोगात्मकाभावत्वं स्वपदेन दुर्धरं । स्वप्रतियोगिनः संयोगाभावस्यानधिकरणाप्रसिद्धेः । स्वपदेनाभावान्तरमादायातिव्याप्तिरित्यत आह—**न देयमिति** ।

न्यायरत्न ।

सकलशब्दस्य व्यापकत्वपरतया तस्य परत्वं तच्छब्दबोधाजनकस्यापि मानसबोधमादाय निर्वहतीति वाच्यम् । यत्तु व्यापकत्वं सकलशब्दस्य शक्यं लक्ष्यं चेति यथाश्रुतमेव सम्यगिति तदसदिव प्रतिभाति । तथाहि सकलघटा रूपवन्त सकलघटनिष्ठपृथिवीत्वभिन्नत्वादौ घटे व्यापकत्वप्रतीत्यापत्तेः । इतरथा सकलाश्चते पदार्था इति भगवान्भाष्यविवरणानुपपत्तेः । एतेन सकलशब्दार्थव्यापकत्वं उत्तरपदार्थतावच्छेदकधर्मत्वस्य निरूपितं येनान्वयो व्यापकत्वस्य तु रूपपृथिवीत्वयोरेव इति निरस्तम् । पदार्थतावच्छेदकघटत्वस्य घटविशेषणतयोपस्थितत्वात्तस्य व्यापकत्वा वयस्थकविशेषणतयान्वयाद्व्युत्पत्तिविरुद्धत्वात् । व्यापकत्वस्य रूपाद्यवृत्तित्वे रूपवन्त इति तद्धितत्वमनुपपन्नञ्च । सविशेषणानां वृत्तिर्न वृत्तस्य च विशेषणयोगो नेत्यभियुक्तवचनाच्चेति दिक् । **देयमेवेति** । तथाच तद्विशिष्टहेत्वभावस्यैव व्यापकतावच्छेदकत्वं विवक्षणीयं । नित्यत्वसत्त्वे तादृशसंयोगाभावत्वस्य स्वपदेनोपादानसम्भवान्नातिव्याप्तिः । नन्वेवमेतद्वृक्षत्ववान् कपिसंयोगाभावादित्यादावतिव्याप्तिः । तत्र स्वप्रतियोग्यनधिकरणवृत्तित्वविशिष्टहेत्वभावस्याप्रसिद्ध्या तादृशहेत्वभावत्वस्य स्वपदेनोपादानासम्भवादत आह—**न देयमेव**

वत्त्वैवाधिकरणभिन्नत्वस्थाने निवेशनीयत्वात् । कपिसयोगाभावादेरिव तदधिकरणताया अप्यव्याप्यवृत्तितया तदभावस्य साध्याभाववति सत्वेनातिव्याप्त्यनवकाशात् । अधिकरणत्वाभावादिश्चाभावप्रतियोगिकतयाऽतिरिक्त एवेति विशेषणताविशेषेणैव तद्वत्त्वं साध्याभाववति विवक्षणीयमिति । एवञ्च निर्धूमत्वव्याप्यवान् निर्वह्नित्वादित्यादौ हेत्वभावस्य वह्न्यादेः प्रत्येकं यावद्विपक्षावृत्तित्वेऽपि हेत्वभावत्वेन तेषां साध्याभावव्यापकत्वाभावादव्याप्तिरिति पूर्वपक्षोऽप्यकिञ्चित्करः । यत्र यावता साध्याभाववता सम्भवस्तत्रापि प्रातिस्विकरूपेण तत्तदधिकरणवृत्तित्वमेव हेत्वभावविशेषणतया लक्षणघटक । ननु साध्याभावव्यापकत्वमित्यभिप्रायेणैतद्दोषदानात् । प्रकारान्तरानुसरणेन परिष्कारे सकललक्षणानामेव परिष्कारसम्भवादलं पल्लवितेन । इति चतुर्थलक्षणदोषः ॥

कृष्णभट्टीय ।

[ यदि चैं, प्रतियोगिवैयधिकरण्यविशिष्ट, यद्धर्मावच्छिन्नाभाववत्त्वमेव, स्वावच्छिन्नाधिकरणभिन्नसाध्याभावाधिकरणकान्यत्वानुयोगितया निवेश्यते । तदा एतद्वृक्षत्ववान्कपिसयोगाभावादित्यादावनिव्याप्त्यभावेपि लाघवादेव न देयमिति ग्रन्थावतारो बोध्य ।] ननु तद्यतद्वृक्षत्ववान्कपिसयोगादित्यादौ हेत्वभावत्वावच्छिन्नानधिकरणाप्रसिध्याऽतिव्याप्तिरित्यत आह—अधिकरणत्वाभावस्यैवेति । ननु हेत्वभावाधिकरणत्वाभावो हेतुरूपएव लाघवा तथाच वह्निमान्धूमादित्यादौ वह्न्यभाववत कालिकसम्बन्धेन तद्वत्त्वादव्याप्तिरतो हेतुतावच्छेदकसम्बन्धेन स्वावच्छिन्नाधिकरणत्वाभाववत्त्व निवेश्यम् । तथाच साध्याभाववति सामान्यादौ तेन सम्बन्धेन तद्वत्त्वाप्रसिध्या सत्तावान् जातेरित्यादावव्याप्तिरत आह—अधिकरणत्वाभावादिश्चेति । यत्रेति । साध्याभाववन्निष्ठसकलस्वनिरूपितवृत्तित्वावच्छिन्नवृत्तिहेत्वभाववेत्यर्थं । एकविपक्षके तु साकल्य न देयमेवेत्याशय । ननु साध्याभाववत्ताया निरवच्छिन्नत्व न दातु शक्यते । सयोगिभिन्न गुणत्वादित्यादावव्याप्ति । अतएव साध्याभावे निरवच्छिन्नवृत्तिकत्वमवच्छिन्नवृत्तिकान्यत्व वा कपिसयोगसाध्यकाव्याप्तेश्च । आद्ये कथञ्चित्तद्विशिष्टसाध्याभाववत्तानिवेशेनादोषेऽपि द्वितीये तथाविधसाध्याभावाप्रसिद्धेरत साध्याभावे प्रतियोगिवैयधिकरण्यविशेषण युज्यते । हेत्वभावे तु गुरुतरप्रतियोगिवैयधिकरण्यविशेषण हेयमेव, किंतु लाघवात् साध्याभाववति साकल्ये निरवच्छिन्नवृत्तित्वमेव दीयताम् । नचैवमारम्भभिन्न कालि

१ विशेषणमिति मे पाठ २०६ मे पु अ.

गदा. प. ९

अत्रान्योन्याभावस्य साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वं वक्तु-

---

[ अथ पञ्चमलक्षणम् । ] साध्यवद्व्यक्तिभेदमादाया(ति)व्याप्तिं परिहरति—अत्रेति । साध्यवत्त्वावच्छिन्नप्रतियोगिताकत्वमिति । साध्यतावच्छेदकविशिष्टसाध्यपर्याप्तप्रतियोगितावच्छेदकतावत्त्वमित्यर्थः । तेन वह्निमान्धूमादित्यादौ तत्तद्वह्निमत्त्वावच्छिन्नप्रतियोगिताकभेदमादाय न दोषः तादृशभेदप्रतियोगितावच्छेदकतायास्तत्तद्वि-

कृष्णभट्टीयं ।

कसंबन्धावच्छिन्नप्रतियोगिताकद्रव्यत्वादित्यादौ कालिकसंबन्धावच्छिन्नद्रव्यभावमादायातिव्याप्तिर्दुर्वारैवेति वाच्यम् । पूर्वमते प्रतियोगितायां हेतुतावच्छेदकसंबन्धावच्छिन्नत्वासत्त्वेऽपि एतन्मते तन्निवेशस्यावश्यकत्वादिति चेन्न । एतन्मते द्रव्यभिन्न संयोगिभेदादित्यादावव्याप्तेः प्रतियोगिवैयधिकरण्यस्यैवावश्यकत्वात् । अथवा संयोगिभेदाभावस्य द्रव्यत्वानतिरूपस्योपगमेऽपि साध्याभाववत्तायां हेत्वभाववत्तायां वा न निरवच्छिन्नत्वमुचितं । तथासति साध्याद्विमत्ताग्रहविरोधितानियामकसंबन्धावच्छिन्नत्वस्यापि निवेशनीयत्वापत्तेः । अस्मन्मतेऽखण्डप्रतियोग्यनधिकरणत्वनिवेशे लाघवादित्यभिप्रायः । इति चतुर्थलक्षणदोषः चतुर्थलक्षणं च समाप्तम् ।

[ अथ पञ्चमलक्षणम् । ] साध्यतावच्छेदकेति । विपर्ययितया वह्नित्वविशिष्टवद्भेदवारणाय साध्यतावच्छेदकनिष्ठावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वमावश्यकं तथाच तेनैवोक्तभेदवारणे तद्विशेषणवैयर्थ्यं । नच रूपवान् पृथिवीत्वादित्यादौ विपर्ययितया रूपत्वविशिष्टवद्भेदवारणार्थमेव तद्विशेषणं प्रतियोगितावच्छेदकतायां साध्यनिष्ठत्वनिवेशेऽपि गुणवान् पृथिवीत्वादित्यादौ विपर्ययितया गुणत्वविशिष्टवद्भेदो दुर्वार एवेति वाच्यम् । साध्यतावच्छेदकव्यापकत्वस्य प्रतियोगितावच्छेदकताया निवेशनीयत्वादिति । मैवम् । व्यापकशरीरे साध्यतावच्छेदकताघटकसंबन्धेन साध्यतावच्छेदकवत्त्वस्यावश्यकतया प्रत्युत व्यापकतानिवेश एव गौरवादिति । वह्निघटोभयवद्भेदवारणाय पर्याप्तेति । अनुयोगितावच्छेदकावच्छेदेनैवेति एवकारः । प्रकारान्तरपदं च तत्सामानाधिकरण्यपरतन्त्रयोगो नास्तीति प्रदर्शनाय । तेन जलं न द्रव्यं गन्धवदिति वाक्यस्य नञ-

व्याप्तरत्नं ।

र्थेति । तदुदाने एतद्वृक्षत्ववान्कपिसंयोगादित्यादावुक्तातिव्याप्तिं वारयत्यधिकरणत्वाभावस्यैवेत्यादिना । इति चतुर्थदोषः चतुर्थलक्षणंच समाप्तम् ।

---

१ निवेशस्य ।

त्पत्तिबललभ्यम् । नहि भवति नीलो घटो पटादन्य इति ॥
इति दीधितौ पञ्चलक्षणी समाप्ता ॥

---

शिष्टवह्निमत्त्व एव पर्याप्तत्वात् । व्युत्पत्तिबललभ्यम् अन्यादिपदसमभिव्याहारबललभ्यम् । नञ्पदसमभिव्याहारज्ञानस्यैव तादृशपदसमभिव्याहारज्ञानस्याप्यन्वयितावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावशाब्द(बुद्धि)त्वावच्छिन्नं प्रत्येव जनकत्वादिति भावः । व्युत्पत्तिबललभ्यमित्यनेन यथाश्रुतलक्षणवाक्यार्थ एवायमिति सूचितम् । तादृशसमभिव्याहारस्थले तत्प्रतियोगिताकाभावमात्रबोधेऽतिप्रसङ्गं सूचयति—नहि भवतीति । प्रामाणिकव्यवहार इति शेषः । तथाचान्वयिप्रतियोगिकाभावमात्रबोधे नीलघटेऽपि पीतघटादिभेदसत्वेन तादृशव्यवहारोपि स्यादिति भावः । द्रव्यं न घट इत्याद्यप्रयोगात् । अनुयोगितावच्छेदकावच्छेदेनैवान्योन्याभावादिरन्यादिपदेन प्रत्याय्यते । अनुयोगितावच्छेदकश्च प्रतियोग्यवृत्तिरेव धर्म इति प्रकाराद्वयीकृतव्युत्पत्त्यविरोधाद्घटो घटा(द)न्य इति प्रयोगवारणसंभवात् । नील इति । घटादन्य इत्यादौ प्राचीनमते पञ्चम्याः

कृष्णभट्टीय ।

र्थस्योद्देश्यतावच्छेदकत्वेन जलभिन्नं द्रव्यमित्यर्थनिराकरणपरावयवग्रन्थाविरोध । अन्यथा अनुयोगितावच्छेदकसामानाधिकरण्येनाभावादेव तादृशार्थाप्रसक्तेस्तदसंगतेरिति । अनुयोगितेति । अव्याप्यवृत्तिद्वित्वावच्छिन्नभेदस्य तदनवच्छेदक एवानुयोगितावच्छेदक इदानीं द्वित्वादिविशिष्टप्रतियोगिनोधकपदासमभिव्याहृतनञ्स्य द्वित्वावच्छिन्नाभावबोधकत्वनियमं स्वीकार्यं । तेन द्वित्वान्वयिप्रतियोगिभेदस्य घटत्वावच्छेदेन सत्वाद्घटो घटान्य इति प्रयोगस्य दुर्वारताप्रसंग । पश्चात्तु प्रयोजनाभावेनैव मतपरित्याग इत्यपि द्रष्टव्य । विरोधादिति । वारणेत्यनेनान्वित । अनुरोधादित्यपि पाठ । ननु नीलघटत्वस्य कथं प्रतियोग्यवृत्तित्वमिति चेत् । निरुक्तसत्वाबात् गुणान्य इति व्यवहारस्य प्रामाण्याद्धर्मावच्छिन्नत्वस्य । प्रतियोग्यवृत्तियद्धर्मो वा प्रतियोगिवृत्तितानवच्छेदक तद्धर्मावच्छिन्नमेव भेदानुयोगितावच्छेदकमिति न योपि दोष । नीलघटत्वावच्छिन्नवाच्य च घटावृत्तीति दीधितिकारोक्तव्युत्पत्तिरप्यावश्यकीति बोध्यम् । साध्यवदन्येति समासे साध्यवत्वावच्छिन्नप्रतियोगिताकस्यैव एकपदव्युत्पत्त्युत्तरभावप्रत्ययलिखनं दीधितिकृतामनुचितमित्याशङ्कापरिहाराय साध्यवतोऽन्येति व्यास इव समासस्थले साध्यव

प्रतियोगित्वमर्थः। तत्र च प्रकृत्यर्थस्य घटत्वादिविशिष्टस्य घटत्वाद्यवच्छिन्नत्वविशिष्टाधेय(ता)त्वसम्बन्धेनान्वयः। अथवा केवलमाधेयत्वमेव (वा) पदस्य सम्बन्धः। धर्मिपारतन्त्र्येण घटत्वादेरपि अवच्छिन्नत्वसम्बन्धेन तत्रान्वयोपगमात्। एक(त्र)विशेषणत्वेनोपस्थितस्यान्यत्र पारतन्त्र्येणान्वयस्य व्युत्पत्तिसिद्धत्वात्। प्रतियोगित्वस्य व्युत्पत्तिवैचित्र्येणान्यपदार्थैकदेशे भेदे निरूपकतासम्बन्धेनान्वयः। घटान्य इत्यादौ निरूपकतासम्बन्धेन घटत्वाद्यवच्छिन्नप्रतियोगिताविशिष्टो लक्षणया घटादिपदार्थः। तत्पुरुषे पूर्वपदस्य तत्तद्विभक्त्यन्तार्थविशिष्टे लाक्षणिकत्वात्। तादृशघटादिपदार्थस्य चाभेदसम्बन्धेन भेदेनान्वयः। नवीनमते (च) घटादन्य इत्यादौ अनुयोगित्वं पञ्चम्यर्थं। तत्र च प्रकृतार्थस्य घटत्वादिविशिष्टस्य स्ववृत्तिघटत्वाद्यवच्छिन्ननिरूपकताकत्वसम्बन्धेनान्वयः। अनुयोगितायाश्चाश्रयतासम्बन्धेन भेदेऽन्वयः। समासस्थले च घटत्वाद्यवच्छिन्ननिरूपितानुयोगिताविशिष्टे पूर्वपदस्य लक्षणा तस्य चाभेदसम्बन्धेन भेदेऽन्वयः। अथैव साध्यवदन्यावृत्तित्वमित्येवादृशलक्षणवाक्यात् अभेदसम्बन्धेन तादृशप्रतियोगिताविशिष्टविशेषितस्तादृशानुयोगिताविशिष्टविशेषितो वा यो भेदस्तद्वदवृत्तित्वमेव प्रतीयते। तथाचानुमित्यौपयिकव्याप्तिस्वरूपजिज्ञासाया तादृशलक्षणाभिधानेऽर्थान्तरप्रसङ्गः। तादृशप्रतियोगितासम्बन्धेन तादृशानुयोगितासम्बन्धेन वा साध्यवद्विशेषि-

## कृष्णभट्टीय।

त्वावच्छिन्नप्रतियोगिताकत्वलाभ कथयितु दृष्टान्ते वैयासिकसामासिकार्थौ दर्शयति—घटान्य इति। विशेषरूपेण सम्बन्धत्वानुपगमात्। अनवच्छिन्नत्वविशेषितप्रतियोगिताया अलाभाच्चाह—अथवेति। घटादन्यो न घटादित्यादौ पञ्चम्या प्रतियोगित्व चेत्यर्थं। तदा घटनिष्ठप्रतियोगिताया निरूपकतासम्बन्धावच्छिन्नाभावबोधो वाच्य। नच निरूपकत्वस्य वृत्त्यनियामकतया तादृशाभावाप्रसिद्धा न सम्भवतीति नवीनमतानुधावन। अनुयोगित्वचाश्रयतारूपस्वरूपसम्बन्धेन वर्तते। तत्सम्बन्धस्य च वृत्तिनियामकतया नानुपपत्तिरिति भाव। घटो नेत्यादौ प्रतियोगितासम्बन्धेनैव घटाभावबोधोपगमेऽपि न क्षति। यत्ने न वैयासिकस्यान्यत्रैवास वादृशो घटादन्य इत्यभिहित, इदानीं समासे तादृशप्रतियोगितादस्य लम्भयितुमाशङ्कते—अथेति।

तभेदवद्वृत्तित्वज्ञानस्यैव लाघवेनानुमितिहेतुत्वादिति चेन्न। यादृशव्याप्तिज्ञानमनुमितिहेतुः तस्यामेवास्य तात्पर्यात्। तस्याः शाब्दबोधाविषयत्वेऽपि तन्मूलकोदीच्यतादृशव्याप्तिविषयिकमानसोपनीतभान(विषय)स्यैवतादृशतात्पर्यनिर्वाह्यत्वात् तादृशशाब्दबोधस्यापि कथंचित् उपपादयितुं शक्यत्वाच्च। नीलो घटः कम्बुग्रीवादिमदन्य इत्यादिवाक्यस्याप्रामाण्यात्। घटः कम्बुग्रीवादिमदन्य इत्या-

कृष्णंभट्टीयं।

घाद्युपायसंभवान्मानसानुधावनं। कथंचिदिति। अन्यपदार्थैकदेशभेदे अभेदसंबन्धेन साध्यवदनुयोगिताकस्य भाने धर्मिपारतन्त्र्येण साध्यवतोऽपि तादृशानुयोगितासंबन्धेन तत्र भानोपगमादनुमित्यौपयिकव्याप्तेरपि ततो लाभ। नील इति कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकभेदाभाववति नीलघटे तादृशभेदबोधकतया तद्वाक्यस्याप्रामाण्यं न संभवतीति तादृशभेदाप्रसिद्धिरिति भावः। कम्बुग्रीवादिमत्त्वावच्छिन्नत्वस्यान्यप्रतियोगितायां तादृशावच्छिन्नत्वावगाहितया संसर्गकोटौ प्रवेशोपगमे तु तुल्यन्यायेन दोषमाह—घट इति। यद्वा कम्बुग्रीवादिमत्प्रतियोगिकभेदभानोपगमे घट इत्यादिवाक्यस्य प्रामाण्यनिर्वाहेऽपि नील इत्यादिवाक्याप्रामाण्यं न निर्वहति। कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकभेदभानोपगमे तु नील इत्यादेरप्रामाण्यनिर्वाहेऽपि घट इत्यादेः प्रामाण्यं न निर्वहतीति बोध्यम्। तादृशावच्छेदकत्वसामान्याभावनिवेशो कम्बुग्रीवादिमत्त्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वापेक्षया घटत्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वादेर्लघुतया प्रतियोगितावच्छेदकतया सामान्याभावाप्रसिद्धिरतः कूटनिवेशः। नन्वेवं वह्निर्न वह्निरिति प्रतीतिव्यवहारयोरापत्तिः। तादृशेन्धनत्वावच्छिन्नभेदसत्त्वात्। नच तत्र तत्तदवच्छिन्नभेदभेदकूटाभानोपगमान्न दोष इति वाच्यम्। इन्धनं न वह्निरिति प्रयोगानुपपत्तेः। नच पारिभाषिकावच्छेदके अन्वयितावच्छेदकधर्मसामानाधिकरण्यनिवेशान्न दोष इति वाच्यम्। कालिकादिसंबन्धेन इन्धनत्ववह्नित्वयोः समानाधिकरणत्वात् संबन्धविशेषविवक्षायामपि, वह्निर्न यद्दीन्धनाद्यन्यतर इति प्रयोगा-

न्यायरत्नं।

**अथ पञ्चमलक्षणम्।** शाब्दबोधस्यापि कथंचिदिति। साध्यवत्पदार्थे साध्यवत्त्वावच्छिन्नप्रतियोगिताकेऽभेदेनान्यपदार्थैकदेशे भेदेऽन्वीयमाने धर्मिपारतन्त्र्येण साध्यस्यावच्छिन्नप्रतियोगिताकत्वसंबन्धेनान्वयः स्वीक्रियते। एवमन्यपदार्थे भेदवन्निरूपितात्मकेऽभेदेन वृत्तित्वेऽन्वीयमाने धर्मिपारतन्त्र्येणान्यस्य निरूपितत्वसंबन्धेनान्वयः स्वीक्रियते। एवं वृत्तित्वपदार्थे वृत्तित्वप्रतियोगिताकात्मकेऽभेदेन वृत्तित्वात्मके वा साक्षात्प्रतियोगितासंबन्धेन नञात्मकनि-

दिवाक्यस्य च प्रमाणत्वात्। अन्वयितावच्छेदकनिरूपितपारिभाषिकमवच्छिन्नत्वं प्रतियोगितायां भासत इत्युपेयम्। अतः साध्यवदन्य इत्यादौ मतुबन्तप्रतिपाद्यतावच्छेदकस्य साध्यसंबन्धस्य साध्यापेक्षया गुरुतयाऽनवच्छेदकत्वेऽपि नोक्तलक्षणवाक्यार्थाप्रसिद्धिः

कृष्णभट्टीयं।

पत्ति। तादृशे इन्धनत्वावच्छिन्नभेदस्य सत्त्वादिति। किंच घटो न प्रमेयगगनमिति प्रयोगानुपपत्तिः। गगनत्वापेक्षया प्रमेयगगनत्वस्य गुरुतया तदवच्छिन्नभेदाप्रसिद्धेः। अत तन्निरूपितपारिभाषिकावच्छिन्नत्वं प्रतियोगितायां भासत इति वक्तव्यम्। तच्चेदवच्छिन्नत्वं यदि स्वविशिष्टसंबन्धीत्यादिरूपं तदा संयोगेन गगनत्वविशिष्टसंबन्धिनोऽप्रसिद्धिरिति चेत्। अत्रेचित्। अन्वयितावच्छेदकव्यापकधर्मावच्छिन्नत्वे तात्पर्यं। एवञ्च प्रमेयगगनत्वरूपं यदन्वयितावच्छेदकं तद्व्यापकं यद्गगनत्वं तदवच्छिन्नत्वमेव पारिभाषिकतदवच्छिन्नत्वमित्यदोषः। स्वविशिष्टसंबन्धीत्यत्र संबन्धिपदं संपातायात स्वात्मक यद्विशिष्ट इति वा विवक्षितं। अभावपदं च भेदार्थकमिति तल्लाभः। नन्वेवं वह्निर्न वह्निरित्यादिप्रयोगापत्तिर्दुर्वारैव। वह्नित्वरूपान्वयितावच्छेदकव्यापकीभूतो यो वह्निघटोभयत्वरूपो धर्मः तदवच्छिन्नभेदस्य बाधितत्वात्। नच व्यापकतायाः प्रतियोगिवैयधिकरण्यं न देयं। तथाच वह्निघटोभयवृत्तिद्वित्वं वह्नित्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वेन वह्नित्वाव्यापकमेवेति वाच्यम्। वह्निर्न घटपटोभयमिति प्रयोगानुपपत्तेः। भेदप्रतियोगितावच्छेदकीभूतघटपटोभयत्वस्य अन्वयितावच्छेदकीभूतद्वित्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वेन तद्व्यापकत्वसंभवात्। एको न द्वावित्यादिप्रयोगानुपपत्तिश्च। एवञ्च व्यापकतायाः प्रतियोगिवैयधिकरण्यस्यावश्यकतया वह्निर्न वह्निरिति व्यवहारो दुर्वार एवेति चेन्न। अन्वयितावच्छेदकधर्मसमनियतधर्मावच्छिन्नत्वमेव तद्धर्मनिरूपितपारिभाषिकमवच्छिन्नत्वं घटवह्न्युभयत्वं च न वह्नित्वेन समनियतमित्यदोषः। नचैवमपि केवलान्वयिवह्नित्वेन समनियततार्णातार्णदहनोभयत्वावच्छिन्नभेदमादाय वह्निर्न वह्निरिति प्रयोगापत्तिरिति वाच्यम्। अन्वयितावच्छेदकसमनियतधर्म-

न्यायरत्नं।

पातार्थेऽन्वीयमाने साध्यवद्विशेषितभेदवद्विशेषितवृत्तित्वावच्छिन्नस्यापि तादृशवृत्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनान्वयः स्वीक्रियत इति व्याप्ते शाब्दबोध। न चाभेदेनैकविशेषितापरपदार्थघटितधर्मावच्छिन्नाभावाद्भेदेनैकपदार्थतावच्छेदकविशेषतापरपदार्थघटितधर्मावच्छिन्नाभावोऽन्य एव। प्रतियोगितावच्छेदकभेदादिति कथं निरुक्तान्वय इति वाच्यम्। समनियताभावानामैक्योपगमेन तादृशधर्मावच्छिन्नाभावयोर्भेदविरहात्। अप्रामाण्यादिति।

पारिभाषिकतदवच्छिन्नत्वं(च) वह्निविशिष्टसंबन्धिनिष्ठाभावीया या या प्रतियोगिता तदवच्छेदकत्वाभावकूटवदवच्छिन्नत्वं । एतादृशावच्छिन्नत्वस्य संबन्धतया प्रातिस्विकरूपेण तत्तत्प्रतियोगिताव्यक्तीनां दु-

कृष्णभट्टीय ।

स्वान्वयितावच्छेदकसजातीयत्वेन विशेषणीयत्वात् । वस्तुतस्तु इहान्वयितावच्छेदकव्यापकत्वमन्वयितावच्छेदकावच्छिन्नानुयोगिताकभेदप्रतियोगिताकभेदप्रतियोगितावच्छेदकत्वरूपमेव निवेश्यमिति न कश्चिद्दोषः । एको न द्वाविति प्रत्ययस्य प्रतियोगिवैयधिकरण्यमनिवेश्यापि निर्वाहसंभवात् । वह्निघटोभयभेदमादाय वह्निर्न वह्निरिति प्रयोगापत्तेः । समनैयत्यनिवेशं विनापि वारणसंभवाच्च । एतेन व्यासज्यवृत्तित्वाव्यासज्यवृत्तित्वान्यतररूपेण साजात्यनिवेशने इमौ न द्वाविति प्रत्ययप्रसङ्गः । अन्वयितावच्छेदकसमनियतत्वावच्छेदकत्वादिति परास्तमित्याहुः । तदसत् । तथासति सत्ताया विशिष्टसत्ताभेदाभावेन सत्ता न सत्तेति प्रयोगवारणेऽपि गुणे न सत्तेति प्रयोगापत्तिः । विशिष्टसत्तात्वस्य सत्तात्वसमनियतत्वात् । तत्र विशिष्टसत्त्वभावसत्त्वात् । वस्तुतस्तु स्वविशिष्टसंबन्धिनिष्ठाभाव प्रतियोगिव्यधिकरणो बोध्यः तेन घटो न वह्निरित्यादौ वह्नित्वादेर्वह्निनिष्ठाभावप्रतियोगितावच्छेदकत्वेऽपि न क्षतिः । संबन्धित्वं प्रतियोगिवैयधिकरण्यं चैकसंबन्धेन । तेन घटो न प्रमेयगगनमित्यादौ गगनाधिकरणाप्रसिद्धावपि तादात्म्येन विषयतया वा संबन्धेन प्रसिद्धेर्न दोषः । तद्विशिष्टगगनाभावस्य तेन संबन्धेन प्रतियोगिव्यधिकरणत्वाभावात् प्रतियोगितयोरेकसंबन्धावच्छिन्नत्वं बोध्यम् । अत्र लक्षणवाक्यात्साध्यवत्त्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वाभावकूटवदवच्छिन्नत्वसंबन्धेन साध्यवत्त्वविशेषिता या प्रतियोगिता तादृशप्रतियोगिताकभेदवदधिकरणावृत्तित्वलाभेऽपि तावदंशो न व्याप्तिस्वरूपम् । साध्यवत्त्वं विहाय साध्यावच्छिन्नप्रतियोगिताकभेदं लक्षणे निवेश्य तावदंशस्यैव अनुमित्यौपयिकत्वादित्या

न्यायरत्न ।

अथ भावः । तत्र कम्बुग्रीवादिमत्प्रतियोगिकभेदभानोपगमे तस्य नीलघटेऽपि सत्त्वेन तादृशवाक्यस्य प्रामाण्यापत्तिरतोऽन्वयितावच्छेदककम्बुग्रीवादिमत्त्वावच्छिन्नत्वस्यैव प्रतियोगितायां भानमभ्युपेयं तस्य चाप्रसिद्धत्वात्तत्संसर्गांशे भ्रमत्वमादाय तादृशवाक्यस्याप्रामाण्यं सम्पादनीयं तथासति पटः कम्बुग्रीवादिमदन्य इत्यादेः प्रामाण्यानिर्वाह इति । **तद्विशिष्टसंबन्धिनिष्ठाभावीया या या प्रतियोगितेति** । कम्बुग्रीवादिमत्त्वविशिष्टसंबन्धिनिष्ठाभावीयप्रतियोगितावच्छेदकतात्वापेक्षया अन्यघटितत्वादृशावच्छेदकतात्वस्य लघुतया तादृशावच्छेदकत्वसामान्याभावप्रसिद्धिरतः कूटनिवेशः । अथात्र यत्संबन्धावच्छिन्नप्रतियोगितानिरूपितपारिभाषिकावच्छेदकत्वं प्रत्यायनीयं तेन संबन्धेन संबन्धित्वं प्रतियोगित्वं च यदि विवक्ष्यते तदा समवायेन प्रमेयगगनं नास्तीत्यादावगतिः । समवाये गगनत्वविशिष्टसंबन्धिनोऽप्रसिद्धेः । यदि च तादात्म्यसंबन्धेनैकसंब-

श्यते कम्बुग्रीवादिमान्घटादित्यादौ विशेषदर्शिनामनुमितेः प्रामाणिकत्वे निरुक्तपारिभाषिकमवच्छिन्नत्वमेवानुमित्यौपयिकव्याप्तिघटकं । तादृशगुरुधर्मावच्छिन्नसाध्यकानुमानस्य केवलान्वयिसाध्यकसमशीलत्ववादिनस्तु स्वरूपसंबन्धावच्छिन्नत्वमेव व्याप्तिशरीरे निवेशयन्ति । इति पञ्चलक्षणी समाप्ता ॥

कृष्णंभट्टीयं ।

योगिताप्यप्रसिद्धैवेत्यत आह—कम्बियति । निरुक्तेति । साध्यविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकं यद्यत् तत्तद्व्यक्तित्वावच्छिन्नभेदकूटवद्धर्मावच्छिन्नप्रतियोगिताकभेदघटितं सर्वत्र लक्षणं कार्यमित्यर्थः । पारिभाषिकावच्छिन्नत्वं न निवेशनीयं । किंतु स्वरूपसंबन्धरूपावच्छिन्नत्वमिति मतान्तरमाह—तादृशेति । उभयसाधारणकेवलान्वयित्वं च अत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्साध्यकत्वं । तथाच कम्बुग्रीवादिमत्साध्यकव्याप्तिरपि मूलकाराभिमतैवेति भावः । केवलान्वयिभिन्ने द्रव्यं पृथिवीत्वादित्यादौ द्रव्यत्वत्वविशिष्टस्य केवलद्रव्यत्वाद्गौरवेण तद्भेदाप्रसिद्धा अव्याप्तिरधिकेत्यस्वरसः ॥ इति कृष्णंभट्टीये पञ्चलक्षणीविवरणम् ।

न्यायरत्नं ।

बोधजनकत्वनिष्ठप्रकारतानिरूपितइच्छीयविशेष्यतासंबन्धेन साध्यसंबन्धविशिष्टप्रकारकवान्यविशेष्यकज्ञानस्यैव तादृशशाब्दबोधहेतुतया तस्य च तादृशसंबन्धप्रकारकत्वाभावेन तादृशसंबन्धज्ञानाभावेपि न तदनुपपत्तिः । शाब्दबोधे संबन्धतात्पर्यज्ञानं न हेतुः किंतु प्रकरणज्ञानमेवेति मताभिप्रायेणेति केचित् । अनियतसंबन्धस्थल एव संबन्धतात्पर्यज्ञानं हेतुरित्यभिप्रायेणेदमुक्तसंबन्धस्य नियतत्वान्न तज्ज्ञानापेक्षेत्यपरे । यद्यपि प्रतियोगितानां तत्तद्व्यक्तित्वेन निवेशे तत्तत्प्रतियोगिताव्यक्त्यवच्छेदकत्वाभावकूटवद्धर्मावच्छिन्नत्वमेव पर्यवसितं तच्च न कम्बुग्रीवादिमत्त्वस्य संबन्धः कम्बुग्रीवादिमत्त्वप्रतियोगिकपदार्थाघटितत्वात्तथापि स्वसमानाधिकरणतादृशकूटवद्धर्मावच्छिन्नत्वमेव संबन्धतया विवक्षितं सामानाधिकरण्यघटकाधिकरणत्वांशस्य कम्बुग्रीवादिमत्त्वप्रतियोगिकतया तद्घटितस्य निरुक्तकूटवद्धर्मावच्छिन्नत्वस्य कम्बुग्रीवादिमत्त्वसंबन्धत्वनिर्वाहः । यद्वा स्वविशिष्टसंबन्धिनिष्ठाभावीयप्रतियोगितावच्छेदकत्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदकूटवद्धर्मावच्छिन्नत्वमेव संबन्धउभयावृत्तिपर्यन्तमुपलक्षणं । तस्य कम्बुग्रीवादिमत्त्वप्रतियोगिकपदार्थघटितत्वात्तत्संबन्धत्वनिर्वाह इति ध्येयम् । ( इति पञ्चलक्षणी संपूर्णा ) ॥

---

# अथ सिंहव्याघ्रलक्षणे ।

नापीति । साध्यमसमानाधिकरणं यस्य, यदधिकरणान-

---

साध्यासामानाधिकरण्यानधिकरणत्वलक्षणे यदि तदधिकरणावृ-त्तिरूपासामानाधिकरण्यं निवेदयते, तदा द्रव्यं सत्त्वादित्यादावतिव्याप्तिः सत्तायाः द्रव्यत्वाधिकरणवृत्तितया तादृशासामानाधिकरण्यान-धिकरणत्वात् तदनधिकरणवृत्तित्वस्यासामानाधिकरणपदार्थत्वेऽनन्व-रवक्ष्यमाणलक्षणाभेद इत्यतो व्याचष्टे—साध्यमिति । असामानाधि-

कृष्णंसद्दीयं ।

## अथ सिंहव्याघ्रलक्षणविवरणम् ।

तदधिकरणेति । यद्यपि समानमधिकरणं यस्येति न तथा । अधिकर-णत्वावृत्त्यधिकरणत्वानिरूपकत्वमित्यर्थात् । यस्य भावः सामानाधिकरण्यम् । साध्यस्य सामानाधिकरण्यं साध्यसामानाधिकरण्यं साध्यसामानाधिकर-ण्यस्य अभाव साध्यासामानाधिकरण्यमित्यव्ययीभावः । तथाच साध्या-धिकरणावृत्तित्वलाभः । तत्र ससंबन्धिकार्थबोधकोत्तरपदघटितसमुदायेन समं नञ्समास इति नञ्मध्यनिवेशोपपत्ति. । ननु न सामानाधिकरण्य-मसामानाधिकरण्यमित्यव्ययीभावोत्तरं साध्यपदघटितपुरुषो महाचार्यसं-मत. । येन समासाप्रविष्टपदार्थान्वयसाधुत्वपक्षतया अव्ययीभावसमासघटक-समानपदार्थे अधिकरणे साध्यपदार्थानन्वयप्रसंगभयेन समासपदस्य साध्या-धिकरणे लक्षणाया. साध्यपदस्य तत्तात्पर्यग्राहकतायाश्च स्वीकारेण गता-

न्यायरत्नं ।

## अथ सिंहव्याघ्रलक्षणविवरणम् ।

तदधिकरणावृत्तित्वरूपमिति । तदन्विताधिकरणवृत्तित्वाभावरूपमि-त्यर्थ । तेन साध्यस्यासामानाधिकरण्यपदार्थघटकत्वेऽपि न क्षति । इदं च स-मानमधिकरणं यस्य स समानाधिकरण. । तस्य भाव सामानाधिकरण्यं साध्यस्य सामानाधिकरण्यं साध्यसामानाधिकरण्यं न साध्यसामानाधिकरण्यं साध्यासा-मानाधिकरण्यमिति व्युत्पत्तिमभिप्रेत्य । तादृशव्युत्पत्तौ समानमधिकरणं यस्येत्यत्र [illegible] दार्थं स एव समानपदार्थैकदेशाधेयतया षष्ठ्यर्थाधेयताया अन्वय. समान-पदार्थस्याधिकरणपदार्थेऽभेदेनान्वयस्तथाच यन्निष्ठाधेयतानिरूपकाभिन्नमधिकर-णमिति विग्रहवाक्याद्बोधः । समानाधिकरणेति समासवाक्ये आधेयतानिरू-

करणं यस्येत्यत्रासमानाधिकरणपदस्य स्वानधिकरणाधिकरणार्थकत्वे

### न्यायरत्नं ।

काऽधिकरणनिरूपिताधेयतावान् लक्षणयाऽधिकरणपदार्थः समानपदं ताहशार्थे लक्षणा तात्पर्यग्राहकमेव । समानाधिकरणपदोत्तरभावप्रत्ययेन ताहशाधेयत्वं बोध्यते । साध्यस्य सामानाधिकरण्यमित्यत्र साध्यपदोत्तरषष्ठ्यर्थ आधेयत्वं तस्य सामानाधिकरण्यपदार्थघटकाधेयतायामन्वयस्तादृशसाध्यसामानाधिकरण्यपदार्थस्य नञर्थेऽभावेऽन्वय इति साध्यनिष्ठाधेयतानिरूपकाधिकरणनिरूपितवृत्तित्वाभावः साध्यासामानाधिकरण्यपदार्थः । **तदनधिकरणवृत्तित्वस्येति ।** समानमेव सामानं साध्यस्य सामानं न भवतीति साध्यासामानं तदधिकरणं यस्य स साध्यासामानाधिकरणस्तस्य भावः साध्यासामानधिकरण्यमिति विग्रहे, समानपदार्थः अधेयतानिरूपकं तदेकदेशाधेयतायां साध्यपदोत्तरषष्ठ्यर्थाधेयताया अन्वयः नञर्थो भेदवान् तदेकदेशे भेदे प्रतियोगितया समानपदार्थान्वयः तथाच साध्यनिष्ठाधेयतानिरूपकभेदवान्साध्यासामानपदार्थः साध्यासामानमधिकरणं यस्येति बहुव्रीहावधिकरणपदार्थः आधेयतानिरूपकं तदेकदेशाधेयताया यत्पदोत्तरषष्ठ्यर्थाधेयताया अन्वयः तथाच यन्निष्ठाधेयतानिरूपकं साध्यनिष्ठाधेयतानिरूपकभिन्नमिति विग्रहवाक्यार्थः समासवाक्ये साध्यानधिकरणवृत्तिर्लक्षणयाऽधिकरणपदार्थः साध्यासामानपदं तादृशलक्षणातात्पर्यग्राहकं भावप्रत्ययेन तादृशवृत्तित्वं बोध्यत इति साध्यानधिकरणवृत्तित्वं साध्यासामानाधिकरण्यपदार्थ इति केचित् । परेतु साध्यपदं साध्याधिकरणलक्षणं समानपदस्याभिन्नत्वार्थः भावप्रधानो निर्देशः यद्वा अभिन्नत्वं तदर्थस्तथाच साध्यसमानमित्यस्य साध्याधिकरणाभिन्नत्वमित्यर्थः ततश्च साध्यसमानं न भवतीति व्युत्पत्त्या नञोऽभाववति लाक्षणिकतया साध्याधिकरणाभेदाभाववान्साध्याधिकरणभिन्नपर्यवसितः साध्यासामानपदार्थः अधिकरणत्वादिवद्भेदप्रतियोगिकाभावरूपस्य स्वरूपतुभयावृत्तिधर्मवत्त्वात्मकतावात्म्यरूपस्य वाऽभेदस्यापि ससंबन्धिकेन वृत्तित्वेन वा घटितत्वया ससंबन्धिकत्वात्मकतो मध्यनिवेशस्यापि साधुत्वाविघटकत्वात्तादृशार्थकसाध्यासामानपदेनाधिकरणपदस्य बहुव्रीहौ भावप्रत्यये च साध्यानधिकरणवृत्तित्वं साध्यासामानाधिकरण्यपदाल्लभ्यत इति वदन्ति । **वक्ष्यमाणलक्षणाभेद इति ।** साध्यवैयधिकरण्यानधिकरणत्वरूपलक्षणार्थाभेद इत्यर्थः तत्रापि साध्यस्य वि अधिकरणं यस्य स साध्यव्यधिकरणस्तस्य भावः साध्यवैयधिकरण्यमिति विग्रहे वि पदस्याधिकरणं भेदश्च खण्डशस्तयार्थः अन्ययानामनेकार्थत्वात्षष्ठ्यन्तसाध्यपदार्थोऽन्विताधिकरणस्य भेदे तस्य चाधेयतानिरूपकत्वाधिकरणपदार्थेऽधिकरणपदार्थैकदेशाधेयतायां यत्पदोत्तरषष्ठ्यर्थाधेयत्वस्यान्वये यन्निष्ठाधेयतानिरूपकं साध्याधिकरणभिन्नमिति विग्रहवाक्याद्बोधः । समासे तु साध्याधिकरणभिन्नवृत्तिर्लक्षणयाऽधिकरणपदार्थः पूर्वपदे तात्पर्यग्राहके भावप्रत्ययेन तादृशवृत्तित्वं बोध्यत इति साध्यानधिकरणवृत्तित्वं साध्यवैयधिकरण्य-

द्रव्य सत्त्वादित्यादावव्याप्ति । द्रव्यत्वादेः सत्ताद्यनधिकरणत्व-विरहेण यत्पदेन सत्त्वादेरुपादानासम्भवात् । सत्तावान् द्रव्यत्वादित्या-

कृष्णभट्टीय ।

मानाधिकरण्यशब्दादेव साध्याधिकरणावृत्तित्वलाभो भवेत् । तथाच कथं तदधिकरणावृत्तित्वरूपासामानाधिकरण्यमित्यभिधानमिति । तथापि तदन्विताधिकरणेत्यर्थविलक्षणाद्य दोष । स्वरीतौ समवन्धिकार्थत्वप्रकारानादेव तथोक्तमिति बोध्यम् । समानमेव सामान न सामान असामान साध्यस्य असामान साध्यासामानम् तत् अधिकरण यस्य स साध्यासामानाधिकरण. तस्य भाव साध्यासामानाधिकरण्य साध्यानधिकरणवृत्तित्वमिति यावत् । अस्मिन्पक्षे पौनरुक्त्य दर्शयति । तदनधीति । साध्यमसमानाधिकरण यस्येति विग्रहवाक्य असमानाधिकरणमित्याकारकबहुव्रीहिरूपोत्तरपदगर्भमिति प्रथमतो समानाधिकरणमिति बहुव्रीहेर्विग्रह प्रदर्शनीय । नच न समान अधिकरण यस्येत्येवरूप तत्र यदि नञर्थभेदे समानपदार्थस्य दैवाल्याद्यधिकरणादे प्रतियोगितया अन्वयस्तदा साध्याधिकरणनिष्ठभेदप्रतियोगिसमानपदार्थीभूतदैवालाद्यधिकरण मलाभ्येत । तथासति साध्य असमानाधिकरण यस्येति द्वितीयबहुव्रीहिविग्रहवाक्यात् यदधिकरणवावच्छिन्नप्रतियोगिताकभेदानुयोग्यधिकरणक साध्य मतीयेत । तत्र अतिव्याप्त्यादिप्रसक्तिमाह—असमानाधिकरणं यस्येत्यादिना । एव च प्रथमबहुव्रीहिविग्रहवाक्ये नञर्थभेदे समानपदार्थस्य प्रतियोगितयान्वय इति न भ्रमितव्य ॥ किंतु अनुयोगितयैवेति द्वितीयबहुव्रीहिविग्रहवाक्यजन्यबोधे यादृशार्थो

न्यायरत्न ।

पदार्थ । पौनरुक्त्यापत्तिरिति क्वचित्पाठ । भिन्नकर्तृकमप्येक लक्षण वाक्यद्वयेनोपन्यस्तो गणिकृत इति शेष । स्वानधिकरणाधिकरणार्थकत्व इति । असमानाधिकरणपदेन असमानमधिकरण यस्य तदसमानाधिकरणमिति विग्रहे समानपदार्थस्याधेयतानिरूपकस्य भेदविशिष्टस्वनञर्थैकदेशे भेदेऽन्वय । तथाचाधेयतानिरूपकभिन्नमसमानपदार्थ अधिकरणपदार्थ आधेयतानिरूपक तदेकदेशाधेयताया पक्षान्तयत्पदार्थस्य यन्निष्ठत्वस्यान्वय तथाच यन्निष्ठाधेयतानिरूपकमाधेयतानिरूपकभिन्नमिति विग्रहवाक्यार्थ । एव न्यसमानपदेनाधेयतानिरूपकसामान्यभेदो न विवक्षितु शक्योऽप्रसिद्धत्वात् । तथापि समानपदस्याधेयताविशेषनिरूपकत्वलक्षणस्वादधिकरणविशेषभिन्नमेव तत्पदेन विवक्षितमेतल्लाभायैव स्वानधिकरणत्वस्य स्वपदमुपात्तम् । समासे तु स्वाधिकरणरूपाधिकरणविशेषभिन्नाधिकरणक लक्षणयाऽधिकरणपदार्थ अत समानपद तात्पर्यग्राहकमिति स्वानधिकरणाधिकरणमसमानाधिकरणपदार्थ । तदधिकरणानधिकरणकत्वपरतयेति । असमानाधिकरणेत्यत्र नञ्न्यासेन समानानधिकरणेति शब्दकल्पनया समान न अधिकरण यस्येति

दाव्व्याप्तेश्च । सत्वादेर्द्रव्यत्वाद्यनधिकरणाधिकरणकत्वादुतत्तदधिकरणतया तत्पदं व्याचष्टे—यदधिकरणेति । यदधिकरणानधिकरणकं साध्यं तत्त्वानधिकरणत्वस्य व्याप्तित्वे, व्याप्तेर्विशिष्टैकार्थतानुपपत्त्या विशिष्टपरामर्शस्यानुमितिहेतुत्वानिर्वाहः । यत्तत्तत्वाननुगमेन तत्त्वाधिकरणत्वाभावकूटस्य निवेशनीयतया गौरवचेत्याशयेन य-

कृष्णभट्टीय ।

विषय वाक्यार्थपरतामाह । तदधिकरणपरतयेति । सचार्थ यदधिकरणत्वावच्छिन्नप्रतियोगिकभेदप्रतियोग्यधिकरणक साध्यमित्येवरूप । यत्तु जगदीशेन साध्य असमानाधिकरण यस्येतस्य साध्य यदधिकरणावृत्तीत्यर्थं । तत्त्वानधिकरणत्व च लक्षण । तत्रच वह्निमान्धूमादित्यादौ वह्निमात्रस्य तत्र धूमाधिकरणावृत्तित्वादव्याप्तिरिति द्वितीयकल्पोऽनतारित । तत्रैतादृशार्थैव धेने किं बीज । न तावत् द्रव्य सत्वादित्यादावतिव्याप्तिवारण । द्रव्यत्वस्य सत्ताधिकरणवृत्तित्वेनातिव्याप्ते । अवतार्यकल्पेन तदुद्धारस्यात्रानुपयोगात् । यदि तु साध्य यदधिकरणसामान्यवृत्तिभिन्नमिति नार्थ किंतु यदधिकरण यत्किंचिद्व्यक्तिवृत्तिभिन्नमिति, तदा तदतिव्याप्त्युद्धारेऽपि तृतीयकल्पाभेद एवेत्यभिप्रेत्य स्वय द्वितीयकल्पोऽन्ययावतारित । स्वाधिकरणानधिकरणकसाध्यत्वानधिकरणत्वोक्तौ त्वाह । यदिति । अन्यथा व्यभिचारिण्यतिव्याप्ते ।

न्यायरत्न ।

व्युत्पत्तौ यदधिकरणमधिकरणविशेषणमिति विग्रहवाक्यार्थ । समासवाक्ये यदधिकरणनिष्ठभेदप्रतियोग्यधिकरणवृत्तिर्लक्षणयोत्तरपदार्थ पूर्वपद तात्पर्यग्राहकमिति, तदधिकरणानधिकरणकमसमानाधिकरणपदार्थ इति कश्चित् । असमानाधिकरणमित्यत्र न समानमधिकरण यस्य साध्यस्येति व्युत्पत्ति । तत्र च समानपदार्थ शैवालाद्यधिकरणे यत्पदार्थसाध्याधिकरणभेदो विधेय । ननु समानपदार्थभेद साध्याधिकरणे विधेय इति नञ्व्यत्यास विनाप्युक्तार्थलाभ इत्यन्ये । परेतु न समानमधिकरण यस्य साध्यस्येति व्युत्पत्तौ यत्पदार्थसाध्यस्य समानपदार्थऽधिकरणेऽन्वयस्तादृशाधिकरणविशेषितनञर्थभेदस्याधिकरणपदार्थ शैवालाधिकरणत्वेऽन्वय इति स्वीकारान्नञ्व्यत्यास विनैव दर्शितार्थलाभ सम्भवतीति वदन्ति । यदधिकरणानधिकरणं साध्यं तत्त्वानधिकरणत्वस्य व्याप्तित्वेऽपीति । यद्यप्ययमर्थो न साध्यासामानाधिकरण्यानधिकरणत्वमिति लक्षणवाक्यात्प्रत्येते । किंतु साध्यमसमानाधिकरण यस्य तत्त्वानधिकरणत्वमिति विग्रहवाक्यादेव । तथापि तस्य तादृशलक्षणवाक्यतात्पर्यविषयत्वाभासङ्गतेति । लक्षणवाक्यतात्पर्यविषयीभूतार्थस्यैव लक्षणत्वस्याभ्युपगमात्लक्षणवाक्यजन्यशाब्दबोधविषयीभूतार्थस्तूक्तलक्षणार्थाभिन्न इति हृदयम् । गौरवं चेति ।

धिकरणं साध्यं तत्त्वं, साध्यनिष्ठासामानाधिकरण्यप्रतियोगि-

---

स्वतन्त्राघटितसाध्यासामानाधिकरण्यपदार्थमाह—**साध्यनिष्ठेति** । साध्यनिष्ठं यदसामानाधिकरण्यं स्वाधिकरणीभूतयत्किञ्चिद्व्यक्तिवृत्तित्वाभावः। तत्प्रतियोगित्वं च तत्प्रतियोगिकोटिनिविष्टाधिकरणकत्वम्। साध्यनिष्ठाभावीयाधेयत्वनिष्ठप्रतियोगितायां निरूपितत्वसम्बन्धेन यदवच्छेदकं तद्वृत्तित्वमिति यावत्। वह्निमान्धूमादित्यादौ साध्यनिष्ठाभावो ह्रदाधेयत्वाभावस्तदीयप्रतियोगितायां निरूपितत्वं उक्तसंबन्धेनावच्छेदको ह्रदादिः। तद्व्यक्तिवृत्तित्वानधिकरणत्वं धूमादाविति लक्षणसमन्वयः। अत्र साध्यनिष्ठाभावप्रतियोग्याधेयत्वं साध्यतावच्छेदकसम्बन्धावच्छिन्नं ग्राह्यम्। अन्यथा वह्निमान्धूमादित्यादौ पर्वतादिसमवेतत्वाद्यभावमादायानुपपत्तेः। तथाच सत्तावान् सम-

कृष्णभट्टीय।

पदार्थमिति। साध्यासामानाधिकरण्ये शब्दे साध्ये असामानाधिकरण्यं यस्येति व्युत्पत्त्यन्तराङ्गीकारेण भावप्रधाननिर्देशात्साध्यनिष्ठासामानाधिकरण्ये प्रतियोगित्वलाभ। द्रव्यं सत्त्वादित्यादेर्वारणाय यत्किंचिदिति। ननु प्रतियोगित्वशब्देन सामानाधिकरण्ये निरूपकत्वग्रहणे तत्राभावीयमपाव। अभावप्रतियोगित्वस्य सामानाधिकरण्यमात्रनिष्ठतया अतिव्याप्ते गृहीतुमशक्यत्वादत आह। तत्प्रतियोगित्वं चेति। प्रतियोगिघटकत्वेनाधिकरणोपादाने शिरोवेष्टनेन नासास्पर्शरीतिभयेन तत्प्रतियोग्याधेयतानिरूपकत्वेन तदुपादेय। स्वाधिकरणीभूतयत्किंचिद्व्यक्तिवृत्तित्वप्रतियोगिकत्व रूपाभावविशेषण हेय। वैयर्थ्यात्। ननु संयुक्तत्वासंयुक्तत्वोभयाभावप्रतियोग्याधेयतानिरूपकतायां पर्वतादौ सत्त्वादव्याप्तिरित्यतोऽवच्छेदकं च विवक्षयति। **साध्येति**। तादृशप्रतियोगितावच्छेदकस्य अयोगोलकवृत्तित्वे पर्याप्तत्वादव्याप्ति। हेतुतावच्छेदकसम्बन्धावच्छिन्नतद्वृत्तित्वनिवेशो च

न्यायरत्न।

दसमुपलक्षणम्। अग्रवैज्ञदुर्लभतापि द्रष्टव्या। **साध्यनिष्ठेति**। साध्येऽसामानाधिकरण्यं स्वाधिकरणयत्किञ्चिद्व्यक्तिवृत्तित्वाभावो यस्य तत्साध्यासामानाधिकरण्यमिति व्युत्पत्त्या भावप्रधाननिर्देशात्साध्यनिष्ठासामानाधिकरण्यलाभ इति केचित्। असामानाधिकरण्यप्रतियोगित्वस्य सामानाधिकरण्य एव सत्त्वाद्व्यभिचारिणि वह्न्यादिहेतुकेऽतिव्याप्तिरत आह—**तत्प्रतियोगित्वं चेति**। **साध्येति**। तादृशावच्छेदकत्वस्यायोगोलकवृत्तित्वे पर्याप्तत्वादतिव्याप्तिरतो

वायित्वादित्यादौ साध्यनिष्ठाभावीयसमवेतत्वनिष्ठप्रतियोगितावच्छेदकाधिकरणाप्रसिद्धेरव्याप्तिः । वह्निमान्धूमादित्यादावपि धूमादावयोगोलकीयवह्न्यादिनिष्ठपर्वतादिवृत्तित्वाभावप्रतियोगितावच्छेद-

कृष्णंभट्टीयं ।

असंभव इत्यतो निरूपितत्वसंबन्धेनेत्युक्तं । **समवायित्वं** । समवायानुयोगित्वं । स्वरूपसंबन्धेन हेतुः । उत्तरत्रापि हेतुतावच्छेदकसंबन्धेन वृत्त्यप्रसिद्धेः समवायेन हेतूपेक्षा । ननु समवेतत्वासमवेतत्वोभयाभावमादाय तादृशप्रतियोगिताप्रसिद्धेरधिकरणाप्रसिध्द्यनुधावनं तादृशाभावप्रतियोगितावच्छेदकताया आधेयतात्वादौ सत्त्वेऽप्यधिकरणे तदसत्त्वादिति । ननु साध्यनिष्ठाभावप्रतियोग्यधिकरणमेव विवक्षणीयं तत्र साध्यतावच्छेदकसंबन्धावच्छिन्नाधेयतासंबन्धावच्छिन्नत्वेन प्रतियोगिताविशेषणान्न दोषः । तादृशेन व्यधिकरणेन सत्तायां सामान्याद्यभावसंभवादित्यत आह—**वह्निमानिति** । **अयोगोलकेति** । अथ महानसीयवह्न्यादौ पर्वतवृत्तित्वाभावसत्त्वेनैवाव्याप्तेः सत्त्वादयःपिण्डीयवह्न्यनुधावनं व्यर्थम् । नच यद्रूपावच्छिन्नसामानाधिकरण्याभावः साध्यनिष्ठः तदन्यहेतुतावच्छेदकवत्त्वं तदर्थं इति तत्सार्थक्यमिति वाच्यं । द्रव्यं सत्त्वादित्यादावतिव्याप्त्युन्मार्जनापत्तेः यद्रूपावच्छिन्नयत्किंचिद्व्यक्तिवृत्तित्वाभावविवक्षणे अयःपिण्डीयवह्न्यनुधावनवैयर्थ्यतादवस्थ्यम् । मैवम् । यदि ह्रदादिवृत्तित्वाभावमादायातिव्याप्तिवारणाय यद्यद्व्यक्तिवृत्तित्वाभाववत्साध्यं तत्तद्व्यक्तिवृत्तित्वानधिकरणत्वं विवक्ष्यते तदा वह्निमान्धूमादित्यादौ यावन्ति हेतुमन्ति तत्तद्व्यक्तिवृत्तित्वाभाववृत्-

न्यायरत्नं ।

निरूपितत्वसंबन्धेन यदवच्छेदकमिति । **समवायित्वं** समवायानुयोगित्वं स्वरूपसम्बन्धेन हेतुः । साध्यतावच्छेदकसंबन्धावच्छिन्नत्वविवक्षणेऽपि समवायेन वृत्त्यप्रसिद्ध्याऽव्याप्तेर्दुर्वारत्वात्समवायेन हेतूपेक्षा । समवेतत्वासमवेतत्वोभयाभावमादाय तादृशप्रतियोगित्वप्रसिद्धेरवच्छेदकाधिकरणाप्रसिध्द्युद्भावनम् । ननु साध्यनिष्ठाभावप्रतियोग्यधिकरणत्वमेव विवक्षणीयम् । प्रतियोगिता च साध्यतावच्छेदकसंबन्धावच्छिन्नाधेयतासंबन्धानवच्छिन्नत्वेन विशेषणीया । सत्ताया समवायावच्छिन्नाधेयतया व्यधिकरणसंबन्धेन सामान्याभावसंभवान्न दोषः । नच वह्न्यादौ संयोगावच्छिन्नाधेयतासंबन्धेन पर्वतह्रदोभयाभावमादाय तत्प्रतियोगितायाः पर्वते सत्त्वादव्याप्तिरिति वाच्यम् । व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन प्रतियोगिताया विवक्षणीयत्वादत आह—**वह्निमान्धूमादित्यादाविति** । **अयोगोलकीयेति** । अथ महानसीयवह्न्यादौ पर्वतवृत्तित्वाभावसत्त्वादव्याप्तिसंभवेऽयोगोलकीयवह्निपर्यन्तानुधावने किं बीजमिति चेद्धूमवान्वह्नेरित्यादौ ह्रदादिवृत्तित्वाभावमादायातिव्याप्तेर्वारणाय यद्यद्व्यक्तिवृत्तित्वाभाववत्साध्यं तत्तद्-

त्वम्, साध्यनिष्ठाधेयत्वनिरूपकाधिकरणवृत्तित्वमिति यावत्।

---

कपर्वतादिवृत्तित्वादव्याप्तिः। साध्यतावच्छेदकव्यापकीभूततदभाव-निवेशे गौरवमित्याशयेन फलितार्थमाह—साध्यनिष्ठाधेयत्व-

कृष्णंभट्टीयं।

स्यापि संभवमाविष्कर्तुं अथ.पिण्डीयवह्न्यनुधावनात्। संख्यावान्परिमाणादित्यादौ यत्किंचिद्दाधेयतावृत्तित्वाभावघटितकूटमादायाव्याप्तेः सत्वेऽपि न क्षतिः। विषमव्याप्तेति वदतां तर्कालंकाराणामेव तत्क्षतेः। वस्तुतस्तु साध्यनिष्ठो यद्रूपावच्छिन्नसामानाधिकरण्याभाव इत्येव साध्यनिष्ठासामानाधिकरण्ये प्रतियोगित्वमिति दीधित्यर्थः। तत्र साध्यसामानाधिकरण्येत्यादिलक्षणे प्रथमत एव द्रव्यं सत्वादित्यादावतिव्याप्तिः शङ्किता। तस्याश्चरमनिष्कर्षेणैव वारणं मध्यार्थाश्चाव्याप्तिवारका एवेति यथाश्रुतसंदर्भः। तदनुसन्धानानामथ पिण्डीयवह्नेरनुधावनं संगच्छत एव। एवंच व्यधिकरणबहुव्रीहिरूपसाध्यसामानाधिकरण्ये शब्दार्थस्य द्रव्यं सत्वादित्यादावतिव्यापकतया अतिजघन्यत्वमालोच्योक्तद्वारकप्रकारस्य विषमव्याप्ते पर्वतीयादिवह्नौ महानसादिवृत्तित्वाभावमादाय समव्याप्ते चाव्याप्तौ न कश्चिद्विरोधः। नच सामानाधिकरण्यस्याव्याप्यवृत्तित्वमतमवलम्ब्य द्रव्यं सत्वादित्यादावतिव्याप्तिः कुतो न वार्यत इति वाच्यं। संख्यावान्परिमाणादित्यादिसमव्यापके विषयावच्छेदेन साध्ये सामानाधिकरण्याद्यभावमादायाव्याप्तेः। साध्याधिकरणावच्छेदकत्वविशेषणदाने च द्रव्यं सत्वादित्यादावतिव्याप्तेः। हेत्वधिकरणावच्छेदकत्वोक्तौ द्रव्यं गगनघटत्वान्यतरत्वादित्यादौ घटत्वादेः साध्यासंबन्धित्वेनानवच्छेदकत्वेनातिव्याप्तेः तदव्याप्यवृत्तित्वस्यानभिमतत्वाच्च। साध्यतावच्छेदकव्यापकेति। सर्वत्र सत्तावान्समवायत्वादित्यादावव्याप्तिर्नोद्धृतैव आधेयतासंबन्धावच्छिन्नाधिकरणाभावस्य वृत्त्यनियामकसंबन्धावच्छिन्नप्रतियोगिताकत्वेनाप्रसिध्या निवेशासंभवादिति चेत्तर्हि साध्यतावच्छेदकसंबन्धान्यसाध्यप्रतियोगिकसंबन्धान्यसंबन्धावच्छिन्नत्वं आधेयतायां निवेशनीयं। नन्वेवं वह्निमान्धूमादित्यादौ वह्नौ स्वरूपसंबन्धावच्छिन्नपर्वतवृत्तित्वसंयोगसंबन्धावच्छिन्नपर्वतवृत्तित्वोभयाभावस्य स्वरूपसंबन्धावच्छिन्नपर्वतवृत्तित्वाभावस्य च सत्वादव्याप्तिः। नच तत्प्रतियोगितावच्छेदककोटावाधेयतात्वस्याप्यन्तर्भाव.। अन्यथा वह्नौ संयोगसंबन्धावच्छिन्नपर्वतवृत्तित्वसत्वेन तदभावदौर्लभ्यापातात्। तदन्तर्भावे च समानाधिकरणमात्रे तादृशसंबन्धेनावच्छेदकपर्याप्तिरित्येतादृशाभावो न लक्षणघटक इति वाच्यं। अधिकरणमात्रे निरूपकतासंबन्धेन अवच्छेदकपर्याप्तेः सकलमतसिद्धत्वात्। अन्यथा जलत्वप्रकारकप्रमाविशेष्यत्वादौ ताद-

मिति । अनिरूपकत्वमिह साध्यनिष्ठाधेयतात्वावच्छेदेन ग्राह्यम् । तेन वह्निमान्धूमादित्यादौ महानसादेः पर्वतीयवह्निनिष्ठाधेयत्वानि-

कृष्णभट्टीय ।

साभाववदवृत्तित्वस्याव्याप्यापातादिति । मैवम् । तादृशाधेयतासामान्यवृत्तिप्रतियोगितानिवेशेनादोषात् । एवञ्च अयतादिकाया अयोगोलकीयवह्न्यादिवृत्तिपर्वतवृत्तित्वाभावशब्देनाप्येतन्मते साध्यतावच्छेदकान्यसाध्यप्रतियोगिकान्यसम्बन्धावच्छिन्नस्यवृत्तित्वप्रतियोगिकाभावस्यैवाभिप्रेतत्वान्न तद्विरोधः । वस्तुतस्तु प्रमेयवान् घटादित्यादौ समवायसंबन्धेन साध्यताया समवायान्यसाध्यप्रतियोगिकसंबन्धान्यसम्बन्ध समवायसंबन्ध एव तदवच्छिन्न सामान्यवृत्तित्वमप्रसिद्धमेवेति नोक्तरीत्या आधेयताविशेषणं सम्यक् । किंतु साध्यतावच्छेदकसंबन्धावच्छिन्नत्वमेव । तथाच सत्तावान्समवायादित्यादावव्याप्तिमनुसृत्यैव वह्निमानित्यादिना दूषणान्तरारोपगौरवमित्यन्तग्रन्थ इत्येव सम्यक् । पूर्वं बहुव्रीहिविग्रहवाक्यजन्यबोधविषयस्य साध्य यदधिकरणानुयोगिकभेदप्रतियोग्यधिकरणमित्येवरूपस्य प्रदर्शनानन्तरं समासान्तरलभ्यार्थं प्रदर्श्य पूर्वबहुव्रीहिलभ्यार्थ एव दीधितिकृता साध्यनिष्ठेत्यादिनाङ्गीकृत । इदं तु बोध्यं । पूर्वबहुव्रीहौ सप्तसाध्यासामानाधिकरण्यशब्दस्य साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वमेवार्थः । आद्यो विग्रहार्थो तृतीय समानान्तरार्थश्च परप्रत्ययार्थं नतु लक्षणघटक इति बोध्य । अनिरूपकत्वं अनिरूपकत्वप्रतियोगिनिरूपकत्वं । आधेयतात्वावच्छेदेन आधेयतात्वव्यापकं । तथाच साध्यनिष्ठाधेयतात्वव्यापकनिरूपकत्वावच्छिन्नप्रतियोगिताकभेदवन्निरूपितवृत्तित्वानधिकरणत्वमिति निष्कर्षः । नच आधेयतात्व आधेयतयामेव । घट्ठवधिकरणतारूपनिरूपकत्वञ्च पर्वतादावपीति वैयधिकरण्यात्कथं व्यापकत्वमिति वाच्यं । स्वाश्रयाधेयत्वाश्रयत्वसम्बन्धेन आधेयतात्व व्याप्य,

न्यायरत्न ।

त्तित्वानधिकरणत्व यदि विवक्ष्यते, तदा वह्निमान्धूमादित्यादौ यावन्ति हेतुमन्ति तत्तदधिवृत्तित्वाभावकूटमपि सम्भवतीति ज्ञापयितुमित्यवधेहि । मू० साध्यनिष्ठाधेयत्वेति । वैशिष्ट्यव्यासज्यवृत्तिधर्मानतिरिक्तधर्मावच्छिन्नाधेयता अधिकरणभेदेऽभिन्नैव नतु साध्यावच्छेदकधर्मान्यथोऽधिकरणभेदेऽप्यभिन्नेति मतानुसरणाद्वह्निनिष्ठसंयोगसम्बन्धावच्छिन्नाधेयत्वानिरूपकाधिकरणे गुणादौ हेतुतावच्छेदकसम्बन्धेन वृत्त्यप्रसिद्ध्या वह्निमान्धूमादित्यादावव्याप्तिरिति पूर्वपक्षाभिप्राय इति ध्येयम् । दर्शितदिशाऽधेयत्वभेदेऽपि यत्किंचिदाधेयतानिरूपकत्वाभावमादाय प्रसक्तामव्याप्तिशङ्का साध्यनिष्ठाधेयतात्वरूपसामान्यधर्मपुरस्कारेण साध्यनिष्ठाधेयताया अनिरूपकत्वान्तविशेषणघटकता । ननु यत्किंचिदाधेयतात्वेनेति दीधित्याशयं प्रकटयन्वारयति । अनिरूपकत्वमिहेति । अनिरूपकत्वान्तविशेषणघटकाधेयत्वमित्यर्थः । आधेयतात्वावच्छेदेनेति । साध्यनिष्ठाधेय-

रूपकत्वेनाव्याप्तिः । एवं साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेनाधेयता निवेशनीया । तेन अयमात्मा आत्ममहाकालान्यतरत्वादित्यादौ कालस्य कालिकसम्बन्धावच्छिन्नात्मत्वादिनिष्ठाधेयत्वादिनिरूपकत्वे-

कृष्णभट्टीय ।

स्वनिरूपितवृत्तित्वसम्बन्धेन स्वनिरूपकत्व व्यापकमिति वह्न्यादिरूपव्याप्यान्तर्भावेन व्यापकत्वोपपत्तेः । नच साध्यनिष्ठाधेयतात्वस्य द्रव्यत्वावच्छिन्नाधेयतासाधारणस्य निरुक्तसम्बन्धेन जले सत्त्वात्तादृशसम्बन्धेन वह्न्यधिकरणत्वरूपनिरूपकत्वासम्भव । यदि च द्रव्यत्वावच्छिन्नाधेयतानिरूपिताधिकरणत्वरूपस्य ह्रदादिसाधारणनिरूपकत्वस्य तादृशाधेयतात्वव्यापकतया गुणादेरेव तदवच्छिन्नप्रतियोगिताकभेदसत्त्वेन नाव्याप्तिः, तदा तुल्ययुक्त्या धूमवान्वह्नेरित्यादावतिव्याप्तिरिति वाच्यम् । आधेयतात्वव्याप्यत्वस्यापि निरूपकतायां निवेश्यत्वात् । आधेयतात्वव्याप्यत्वं च साध्यानुयोगिकत्वविशिष्टस्वाश्रयाश्रयत्वसम्बन्धावच्छिन्नप्रतियोगिताकाधेयतात्वाभाववति स्वनिरूपितवृत्तित्वसम्बन्धेनावृत्तित्वं स्वाश्रयनिरूपिताधेयतात्वप्रवेशे वह्निसमानाधिकरणद्रव्यान्तरव्याप्यत्वभङ्गप्रसङ्ग । नचैवमपि वह्निमान् धूमादित्यादावव्याप्ति । वह्न्यधिकरणयावन्मात्रनिष्ठवह्न्यधिकरणतारूपनिरूपकतायां वह्निनिष्ठवैशालादिसाधारणद्रव्यत्वावच्छिन्नाधेयतात्वव्यापकत्वासम्भवात् । द्रव्यत्वावच्छिन्ननिरूपकतायाश्च तादृशाधेयतात्वाव्याप्यत्वादिति वाच्य । साध्यानुयोगिकत्वविशिष्टस्वाश्रयाश्रयत्वसम्बन्धेन साध्यनिष्ठाधेयतात्वाधिकरणनिष्ठाभावप्रतियोगित्वरूपतादृशाधेयतात्वव्यापकत्वनिवेशात् । अथैवमभावे साध्यतावच्छेदकव्यापकत्वनिवेशे गौरवाभिधानमसङ्गतम् । ननु वैयर्थ्यभयसमपेक्ष्य लाघवात् । अत्रेदं समाधानमाकलयामहे । सूक्ष्मदृष्ट्याधेयताविशेषाभावस्य साध्यतावच्छेदकव्यापकत्वादव्याप्ति । नच निरूपकतासम्बन्धेन अधिकरणवद्भाव प्रवेश्य इति वाच्य । तथासति संयुक्तत्वसमवेतत्वयो निरूपकतायाः एकजातीयत्वेन आधेयतायां साध्यतावच्छेदक

न्यायरत्न ।

तात्वरूपसामान्यधर्मावशेषितमित्यर्थ इति केचित् । परेतु यदाधेयतावच्छेदकभेदेनैवाधेयत्वतन्निरूपकत्वयोर्भेदस्तदाऽनिरूपकत्वम् । अनिरूपकत्वप्रतियोगिनिरूपकत्वम् । आधेयतात्वावच्छेदेन आधेयतात्वव्यापकम् । तथाच साध्यनिष्ठाधेयतात्वव्यापकनिरूपकत्वावच्छिन्नभेदो निवेश्य इति पर्यवसितम् । अत्र व्याप्यत्वं स्वाश्रयाश्रयत्वसम्बन्धेन व्यापकत्वं तु स्वनिरूपिताधेयतात्वसम्बन्धेन ग्राह्यते नानेयतात्वनिरूपकत्वयोर्नैयधिकरण्येऽपि न क्षति । नच धूमवान् वह्न्यधिकरणत्वादित्यादौ द्रव्यत्वावच्छिन्नाधेयतासाधारणसाध्यनिष्ठाधेयतात्वव्यापकनिरूपकत्वावच्छिन्नभेदस्य गुणादावेव सत्त्वादतिव्याप्तिरिति वाच्यम् । तार

कृष्णंभट्टीयं ।

संबन्धानवच्छिन्नत्वविशेषणवैयर्थ्यात् । साध्यतावच्छेदकतदितरसंबन्धावच्छिन्नाधेयतयोर्व्यभिचारनिरूपकाधिकरणवत्त्वसत्त्वेन तदभावस्य साध्ये सत्त्वेनातिव्याप्तेश्च । तत्तन्निरूपकतात्वेन संसर्गत्वं तु विशेषरूपेण संबन्धत्वापत्तिपराहतं । नच साध्यतावच्छेदकसंबन्धावच्छिन्नाधेयतात्वावच्छिन्नत्वं प्रतियोगिताविशेषणमिति वाच्यं । एवमपि पूर्वक्षणवृत्तित्वविशिष्टपर्वतसंयुक्तत्वाभावमादायाव्याप्तेः । नच भावेऽव्याप्यवृत्तित्वं निरवच्छिन्नविशेषणतासंबन्धेन व्यापकत्वं वा निवेश्यमिति वाच्यं । एवमपि घटपर्वतसंयुक्तत्वोभयाभावावारणात् । नच प्रतियोगिवैयधिकरण्याघटितसाध्यतावच्छेदकव्यापकत्वोपादानादुक्ताभावद्वयनिरास इति वाच्यं । तथापि निरुक्तहृदपर्वतसंयुक्तत्वोभयाभावावारणात् । तस्य केवलान्वयित्वेन तदभावासत्त्वादिति । नच तदवारणेऽपि न क्षतिः । पर्याप्तिसंबन्धेन तदवच्छेदकतायाः उभयत्रैव सत्त्वात् । तदुभयावृत्तित्वस्य धूमे संभवेनाव्याप्त्यसत्त्वादिति वाच्यं । उभये पर्याप्तेः प्रत्येकपर्याप्तिनियतत्वात् । अतः साध्यतावच्छेदकसंबन्धावच्छिन्नाधेयतासामान्यवृत्तित्वं प्रतियोगिताविशेषणमावश्यकं । तथावच्छेदकताघटकनिरूपकत्वस्वरूपसंबन्धनिरूपकतादृशसंबन्धावच्छिन्नाधेयतात्वव्यापकत्वमिति नासंभवः । स्वप्रतियोगिकसामानाधिकरण्य स्वाभावविशेषणमिति पूर्वक्षणवृत्तित्वविशिष्टपर्वतसंयुक्तत्वाद्यभावनिरास । तथाच साध्यनिष्ठभेदप्रतियोगितावच्छेदकत्वमेव साध्यतावच्छेदकव्यापकत्वमिति व्यापकताघटकसत्त्वेऽप्यधिकविशेषणसत्त्वाद्गौरवाभाससंगतिरनुपादेयैवेति कृतबुद्धयो विदांकुर्वन्तु । अत्रेदं बोध्यं । ननु नैयत्यनिवेश तत्र परंपराभेदानां संबन्धत्वं चापेक्ष्य द्रव्यत्वावच्छिन्नाधेयतावारणाय साध्यतावच्छेदकव्याप्ये धर्मान्तरावच्छिन्नसाध्यनिष्ठाधेयत्वान्तरनिष्ठन्यूनवृत्तितानिरूपकाधेयतान्यत्वं साध्यनिष्ठाधेयताविशेषणं तत्तद्व्यक्तित्वावच्छिन्नाधेयतामादायाव्याप्तिवारणायानवच्छिन्नान्तमन्तरविशेषणं । एतद्रूपादिसाध्यके तत्तत्क्षणावच्छिन्ने तद्रूपत्वावच्छिन्नाधेयताया एव प्रसिद्धिः । साध्यनिष्ठाधेयतात्वावच्छेदेनेत्यस्यान्यत्रैव तात्पर्यम् । साध्यनिष्ठतादृशाधेयतानिरूपकत्वसामान्याभावश्च निवेश्य. । अथवा साध्यतावच्छेदकसमनियताधेयतैव निवेश्या । भङ्गीभेदलाभायैव लघुतरेऽप्याभासप्रकारे यथाश्रुतदीधित्यनुसारेण गौरवाभिधानम् । अथवा साध्यनिष्ठाधेयतायां साध्यतावच्छेदकावच्छिन्नाधेयतान्यत्वं, साध्यनिष्ठाधेयतात्वावच्छेदेनेत्येतल्लभ्यम् । अवच्छेदकानवच्छिन्नेत्यस्य पर्याप्त्यनुपादानात्सत्वावच्छिन्नाधेयतायाः साध्यतावच्छेदकावच्छिन्नतया क्वचिद्व्यभिचारिणीति पङ्क्तिसंगतिः । तद्व्यतिव्याप्तिवारणाय पर्याप्त्युपादानेतु नन्वयवैयर्थ्यात् । साध्यतावच्छेदकावच्छिन्नत्वोपादाने नायं दोष इत्यग्रिमग्रन्थसङ्गतिः । नच साध्यतावच्छेदकावच्छिन्नाधेयताया उपादानेऽपि पर्याप्त्युपादानानुपादानाभ्यां पङ्क्तिग्रन्थौ संगच्छेते एवेति वाच्यम् । तथासति साध्यनिष्ठत्वपरित्यागेनोदक्षरता-

तदनधिकरणत्वमित्यर्थः । साध्यवद्भिन्नस्य च साध्यनिष्ठाधेय-

---

ऽपि नातिव्याप्तिः । तादृशाधेयत्वानिरूपकत्वमनधिकरणत्वमविवक्षितम् । तदनिरूपकमात्रं निविष्टम् । प्रथमतो द्रव्यं सत्त्वादित्यादावतिव्याप्तेराशङ्कितत्तया व्यभिचारसामान्य एवातिव्याप्तिमुद्धरति । साध्यवद्भिन्नस्य चेति । व्यभिचारनिरूपकाधिकरणस्येत्यर्थः ।

कृष्णभट्टीय ।

पत्ते । एतत्सर्वमवच्छेदकभेदादाधेयताभेदमभ्युपेत्य । वस्तुतस्तु । साध्यनिष्ठाधेयतानिरूपक यद्यत्तत्तद्भेदकूट एव निवेश्य । अन्यथाधिकरणभेदेनैव निरूपकताना भेदाद्वह्निमान्धूमादित्यादावव्याप्तेः । एवञ्च निरूपकताभेदेनैवाधेयताना भेदात्साध्येतरवृत्त्याधेयताना लक्षणघटकत्वादेव दोष । साध्यनिष्ठाधेयतात्वावच्छेदेनेत्यस्याप्ययमेव तात्पर्यम् । एवञ्च तत्र समनैयत्यादिविवक्षणं सर्वं व्यर्थमेव । एतेन साध्यतावच्छेदकव्यापकाभावप्रतियोग्याधेयतानिरूपकाधिकरणवृत्तित्वानधिकरणत्वे तात्पर्यमित्यपास्तम् । सत्तावान् समवायित्वादित्यादावव्याप्तिनादवस्थ्याच्च । अथवा साध्यनिरूपितानिरूपकत्वाभावे तादृशनिरूपकभेदे वा तत्तात्पर्यम् । द्वितीये साध्येन रूपेणाधिकरणभेद इति नाभेद इति शिवम् ॥ अत्रापि समानाधिकरणपदे । अधिकरणपदद्वयमपि आधेयतानिरूपकपरं तत्र साध्ये न प्रवेशो आधेयत्वानिरूपकवृत्तित्वलाभ स्यात्, न तु आधेयत्वानिरूपकाधिकरणवृत्तित्वलाभ । मध्यमाधिकरणलाभकारम्भात् । नचाधेयतानिरूपकाधिकरण तदर्थं । तथाप्यनिरूपकाधिकरणतावदित्यनभिधायैवमभिधाने धटनैवेत्यालोच्य अधिकरणस्य लक्षणाघटकत्वमह । तादृशेति । यत्तु साध्यनिष्ठाधेयतानिरूपकत्वपदस्य प्रवेशासम्भव । आधेयताधिकरणतयोरधिकरणत्वान्तर्भावेनैवावश्यकनिरूपकताव्यवहारोपपत्तौ साध्यवत साध्यनिष्ठाधेयतानिरूपकत्वान्तरे मानाभावादित्यधिकरणपद । तथाच तादृशाधेयतानिरूपकाधिकरणत्वावच्छिन्नभेदनिवेशान्न दोष इति । तन्न । अधिकरणमाधेयतानिरूपकमिति मुख्यव्यवहारानुरोधेन निरूपकत्वान्तरस्वीकारस्य सर्वाभिमतत्वात् । यदपि अधिकरणनिष्ठनिरूपकत्वान्तरोपगमेऽपि वह्निमान्पर्वत तदधिकरणत्वैतदन्यतरत्वादित्यादौ हेतुमत साध्यनिष्ठाधेयतानिरूपकत्वादतिव्याप्तेरधिकरणपद निवेश

न्यायरत्न ।

आधेयतात्वव्याप्यत्वस्यापि निरूपकत्वविशेषणत्वात्तादृशाधेयतात्वव्याप्यत्व च साध्यवृत्तित्वविशिष्टसाध्यसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकनाशाधेयताभावत्व स्वनिरूपितवृत्तित्वपर्यवसन्नेनावृत्तित्वम् । यदि यावच्छेदकं यत्प्यधिकरणभेदेनैवाधेयताभेदस्तदा साध्यनिष्ठाधेयतानिरूपक यद्यत्तद्भेदकूटमत्र नि-

त्वानिरूपकत्वात्तद्वृत्तौ नातिप्रसंगः। साध्यनिष्ठाधेयत्वानिरूपकाधिकरणत्वव्यापकाभावप्रतियोग्यधिकरणतासामान्यकत्व-

---

अत्राधिकरणवृत्तित्वं हेतुतावच्छेदकसंबन्धेन वाच्यम्। अन्यथा वह्निमान्धूमादित्यादौ वह्न्यादिनिष्ठाधेयत्वानिरूपकस्यावयवादौ धूमादेः समवायेन वृत्तेरव्याप्त्यापत्तेः। इत्थंच सत्तावान् द्रव्यत्वादित्यादावव्याप्तिः। साध्यनिष्ठाधेयत्वानिरूपकत्वाधिकरणे सामान्यादौ हेतुतावच्छेदकसंबन्धात्मकसमवायादिना वृत्तेरप्रसिद्धेः। एवं द्रव्यं विशिष्टसत्वादित्यादावपि विशिष्टसत्वादेः सत्ताद्यनतिरिक्ततया साध्यनिष्ठाधेयतानिरूपकाधिकरणगुणादिवृत्तित्वानधिकरणत्वासंभवादव्याप्तिरित्यतो निष्कृष्टार्थमाह—साध्यनिष्ठेति। अत्रापि पूर्वदोषवारणाय साध्यतावच्छेदकसंबन्धावच्छिन्नत्वेनाधेयत्वं निवेशनीयम्। एवमधिकरणत्वमप्यविवक्षितम्। तादृशाधेयत्वानिरूपकत्वव्यापकतैवाभावे निवेशनीया तादृशाधेयत्वानिरूपकवृत्तित्वमात्रनिवेशे धूमवान्वह्नेरित्यादौ वह्न्यधिकरणतासामान्याभावस्य धूमनिष्ठाधेयत्वानिरूपकह्रदादिवृत्तित्वादतिव्याप्तिरतो व्यापकतानिवेशः। व्यापकत्वं तद्वन्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वं नतु तद्वन्निष्ठात्यन्ताभावाप्रतियोगित्वम्। सर्वस्यैव तथाविधद्वित्वावच्छिन्नाभावप्रतियोगितया तदप्रसिद्धेः। नवा तद्वन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्। तादृशाभावप्रतियोगितावच्छेदकीभूताभावत्वादिकमादाय वह्न्यधिकरणत्वसामान्याभावस्यापि धूमानधिकरणत्वव्यापकतया अतिव्याप्त्यापत्तेः। अनवच्छेदकत्वं चावच्छेदकताप-

कृष्णभट्टीयं।

णाधिकरणनिष्ठनिरूपकत्वलाभार्थं। एष तादृशाधेयतानिरूपकं यदधिकरणमिति योजनयेति। तत्तुच्छतरं। अधिकरणतासाधारणनिरूपकत्वस्य मानाभावात्। विशिष्याधिकरणनिष्ठनिरूपकत्वविशेषस्यैव लब्धत्वात्। अन्यथा अधिकरणपदपूरणापत्तेः। नच तादृशनिरूपकभेदकूटलाभार्थमधिकरणपदमिति युज्यते तल्लाभस्य नञ्मात्राधीनत्वात्। नापि अधिकरणपदार्थतावच्छेदकाधिकरणत्वे साध्यनिष्ठाधेयत्वानिरूपकत्वान्वयार्थमधिकरणपदं। असंभवापत्तेः। साध्यवन्निष्ठत्वेनेति पक्षौ कथनमुत्तरलक्षणेऽतिव्याप्तिनिराससूचनं।

योरुयनधिकरणत्वम् । अत उभयवद्भेदमादाय न दोषः । अथवा यदधिकरणासामान्याभाववत्वं साध्यनिष्ठाधेयत्वानिरूपकवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकं तत्त्वमेव समुदायार्थः । अतो अभावत्वादिना व्यापकतामादाय न दोषः । अधिकरणता च हेतुतावच्छेदकसंबन्धावच्छिन्ना ग्राह्या । तेन वह्निमान्धूमादित्यादौ वह्न्यधिकरणधूमावयवादौ धूमाधिकरणत्वसामान्याभावसत्त्वेऽपि न क्षतिः । धूमवान्वह्नेरित्यादौ यत्किंचिद्वह्न्यधिकरणत्वाभावस्य धूमानधिकरणत्वव्यापकतया ऽतिव्याप्तिवारणाय सामान्यपदम् । तथाच तादृशाधेयत्वानिरूपकत्वव्यापकाभावप्रतियोगितावच्छेदकं यद्रूपावच्छिन्नाधिकरणतात्वं, यद्रूपावच्छिन्नाधिकरणतात्वावच्छिन्नाभाववत्वं वा तादृशानिरूपकत्वव्यापकतावच्छेदकं तद्रूपत्वमिति फलि-

कृष्णंभट्टीयं ।

समवायेनेति । यत्किंचित्संबन्धेन वृत्तित्वोक्तौ चातिव्याप्तिर्द्रष्टव्या । हेतुतावच्छेदकसंबन्धावच्छिन्नाधेयतासंबन्धेन साध्यनिष्ठाधेयत्वानिरूपकाधिकरणाभावस्य हेतुतावच्छेदकसंबन्धान्यहेतुप्रतियोगिकसंबन्धान्यसंबन्धावच्छिन्नतादृशवृत्तित्वाभावस्य वा निवेशो वाह—एवमिति । व्यापकत्वंचेति भेदत्वमखण्डोपाधिरिति न प्रतियोगितावच्छेदकसंबन्धनिवेशः । अवच्छेदकत्वं स्वरूपसंबन्धेन निवेश्यं तेन हेत्वधिकरणत्वाभावस्य विषयितासंबन्धेनावच्छेदकत्वेऽपि नाव्याप्तिः । तदुभयोरुत्कर्षभेदवान् सदीर्घदण्डादित्यादौ [illegible] हेत्वधिकरणत्वाभाववत्वविशिष्टरूपध्वंसादेः साध्यनिष्ठाधेयत्वानिरूपकत्वव्यापकतयानिव्याप्तिः । अतो हेत्वधिकरणत्वाभावस्य वैशिष्ट्यं स्वरूपसंबन्धेन निवेश्यमिति तु न शङ्क्यं । तथापि हेत्वधिकरणत्वाभावस्याव्यापकत्वात् । ननु एतद्वृक्षत्ववान् कपिसंयोगादित्यादौ हेत्वधिकरणत्वाभावादेः केवलान्वयित्वादनिव्याप्तिरित्यत आह । अथवेति । इदंतु बोध्यं । तत्समानाधिकरणभेदप्रतियोगितानिरूपितनिरवच्छिन्नविशेषणतासंबन्धावच्छिन्नावच्छेदकताशून्यत्वे सति निरवच्छिन्नवृत्तित्वं व्यापकत्वम् । निरवच्छिन्नवृत्तित्वोपादानात्वव्यतामविषयत्वरूपव्यभिचारिहेत्वधिकरणत्वाभावस्य निरुक्तव्यापकत्वेऽपि नक्षतिः । व्यापकीभूताभावप्रतियोग्यधिकरणतानिवेशस्थाने व्यापकीभूतभेदप्रतियोगितावच्छेदकाधिकरणतानिवेशो वा । तथाचात्यन्ताभावघटितव्यापकत्वपरिष्कारोऽनाधेय इति । हेत्वधिकरणतात्वव्यापकप्रतियोगिताकत्व निरस्यति । तथाचेति । तादृशेति । व्यापकाभावप्रतियोगितायामधिकरणतानिष्ठायां निरूपकतासंबन्धेनावच्छेदकताया अवच्छेदकहेतुतार-

तोऽर्थः । तेन धूमानधिकरणत्वव्यापकीभूतवह्न्यनधिकरणत्वधूमाधिकरणत्वोभयसामान्याभावप्रतियोगिताया वह्न्यनधिकरणत्वसामान्यनिष्ठत्वेऽपि नातिव्याप्तिः । यदधिकरणतामात्रनिवेशे द्रव्यं विशिष्टसत्त्वादित्यादावव्याप्तिः । द्रव्यत्वानधिकरणगुणादौ हेत्वधिकरणतात्वावच्छिन्नाभावसत्त्वात् । अतो यद्रूपावच्छिन्नेति । हेत्वभावस्य व्यापकतानिवेशे व्यापकताशरीरे हेतुतावच्छेदकसम्बन्धेन तद्वन्निष्ठत्वं निवेश्यम् । अन्यथा वह्निमान्धूमादित्यादौ साध्यनिष्ठाधेयत्वानिरूपकह्रदादौ धूमात्मकाभावस्य कालिकसम्बन्धेन वृत्तेरव्याप्त्यापत्तेः । तथासति सत्तावान् द्रव्यत्वादित्यादावव्याप्तिः । साध्यनिष्ठाधेयत्वानिरूपकाधिकरणे हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धेः । अतो हेत्वधिकरणत्वाभावस्य व्यापकताघटितमेव लक्षणं कृतम् । तथाचाधिकरणतायाः विशेषणताविशेषेण वृत्तिमत्तया तेन सम्बन्धेन तन्निष्ठत्वं निवेश्य, अतो न दोषः । पूर्वकल्पपरित्यागे बीज-

कृष्णभट्टीय ।

च्छेदकत्वस्य वाच्यतया विशिष्टपरामर्शानुपपत्तिः । यद्रूपेति । यद्रूपावच्छिन्नाधिकरणताप्रतियोगिकाभावस्य वह्न्यधिकरणत्वगगनोभयाभावाधिकरणतयाऽतिव्याप्तिः । तदवच्छिन्नाभावाप्रसिद्धेरतस्तथा नोक्तम् । तादृशनिरूपकाधिकरणवृत्त्यभावप्रतियोगितायाः स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनानवच्छेदकीभूताधिकरणतानिरूपकतावच्छेदकं स्वावच्छिन्नाधिकरणताकत्वसम्बन्धेन अनवच्छेदकं वा यद्धेतुतावच्छेदकं तद्रूपवत्त्वमर्थ इति न विशिष्टपरामर्शानुपपत्तिः । हेत्वभावस्येति । स्वमित्यादिवृत्त्यनियामकसम्बन्धेन हेतुतावत्त्व धनादिसम्बन्धस्य व्याप्यतयैवोपपत्तेः । वह्न्यादेः साध्यतायां रूपादेः संयोगेन हेतुतायां व्याप्त्युपगमेऽपि न क्षतिः । तत्र पक्षधर्मताविरहादेव परामर्शस्याप्रमात्वसम्भवादिति भावः । हेत्वभावे प्रतियोगिवैयधिकरण्यागन्वेन व्याप्यताघटकाभावस्य हेतुमत्ताग्रहविरोधितानियामकसम्बन्धावच्छिन्नप्रतियोगितानिवेशोऽप्याह । अन्यथेति । कृतमिति । अधिकरणताचेह न सम्ब

न्यायरत्न ।

न्धेऽस्य साध्यनिष्ठेत्यादिग्रन्थस्याप्यत्रैव तात्पर्यमिति वदन्ति । अव्याप्यवृत्त्यधिकरणताया अव्याप्यवृत्तित्वमतेऽव्याप्यवृत्तिव्यभिचारिण्यतिव्याप्तिरभावे प्रतियोगिवैयधिकरण्यादिनिवेशे गौरवमित्यालोच्याह—अथवेति । अप्रसिद्धेरतो हेत्वधिकरणत्वाभावस्येति । एतेन वृत्त्यनियामकेन व्यधिकरणेन वा सम्बन्धेन हेतुतास्थलेऽव्याप्तेरतिव्याप्तेर्वा वारणमधिकरणत्वनिवेशनप्रयोजनमिति

मिति निष्कर्षः । तेन सत्तावान् द्रव्यत्वादित्यादौ न दोषः । साध्यवैयधिकरण्यं साध्यवद्भिन्नाधिकरणत्वम् । चरमाधिकरणत्वांशस्यानतिप्रयोजनकतया तमपहाय स्वयमेकोक्त्यानूद्य दूष-

---

माह—तेनेति । न दोष इति । सामान्यादौ हेतुतावच्छेदकसंबन्धेन वृत्तेरप्रसिद्धावपि तत्सम्बन्धावच्छिन्नायाः द्रव्यत्वाधिकरणतायाः द्रव्ये प्रसिद्धाया अभावस्य साध्यानधिकरणत्वादिति भावः । इति सिंहव्याघ्रलक्षणयोः प्रथमलक्षणं समाप्तम् ।

अथ सिंहव्याघ्रलक्षणयोः द्वितीयलक्षणम् । साध्यवैयधिकरण्यस्य निरुक्तार्थकत्वे पौनरुक्त्यापत्तेस्तद्व्याचष्टे । साध्येति । इति सिंहव्याघ्रलक्षणयोः द्वितीयलक्षणं समाप्तम् ॥

कृष्णंभट्टीयं ।

ग्यता । तादात्म्यसंबन्धेन साध्यतायामिव तादात्म्येन साधनतायामपि व्याप्यत्वीकाराद् । इति सिंहव्याघ्रलक्षणयोः प्रथमलक्षणं समाप्तम् ।

( अथ सिंहव्याघ्रलक्षणे द्वितीयलक्षणम् । ) निरुक्तार्थकत्वमिति । साध्य व्यधिकरणं यस्येति विग्रहः । व्यधिकरणमिति बहुव्रीहिरूपोत्तरपदघटित. । तत्र विभिन्न अधिकरणमित्यं आधेयतानिरूपकभिन्नं अधिकरणं यस्येति विग्रहात् यदाधेयतानिरूपकतावच्छिन्नप्रतियोगिताकभेदाधिकरणं प्रतीयते । व्यधिकरणमिति समासात्तु अधिकरणनिष्ठभेदप्रतियोगितावच्छेदकीभूतनिरूपकत्वाकाधेयतावान् बुध्यत इति । शेषमभिमरीत्या द्रष्टव्यम् । साध्येतीति । विभिन्नमधिकरणं यस्य तद् व्यधिकरणं तस्य भावस्तत्त्वं साध्याद्वैयधिकरण्य साध्यवैयधिकरण्यम् । साध्यपदस्य साध्याधिकरणे लक्षणेति साध्यानधिकरणवृत्तित्वलाभः । इति सिंहव्याघ्रलक्षणयोः द्वितीयलक्षणं समाप्तम् ।

न्यायरत्नं ।

वर्णयन्तो जगदीशा परास्ता । पक्षधर्मीयाव्याप्तिवारणाय व्यापकतापटितपरिष्कारारम्भस्तैरेव मतानान् द्रव्यत्वादित्यादावधिकरणत्वनिवेशप्रयोजनसम्भवे तदुपेक्षया निर्बीजत्वादिति ध्येयम् । इति सिंहव्याघ्रप्रथमद्वितीयलक्षणे समाप्तं ॥

शति—तदुभयमपीति । साध्येत्यादेः, साध्यं यदधिकरणा-

---

ननु मूले तदुभयमपि साध्यानधिकरणानधिकरणत्वमित्यनेनोक्तलक्षणद्वयानुवादोऽसङ्गतः। असामानाधिकरण्यवैयधिकरण्ययोरधिकरणताद्वयघटितत्वेन तादृशलक्षणयोरधिकरणतात्रयघटितत्वादनुवादे चाधिकरणताद्वयमात्रस्य निवेशादित्यतस्तादृशमूलं सङ्गमयति—चरमेति । अनतीति । अनधिकरणत्वस्याधिकरणत्वाभावरूपतया तद्घटकाधिकरणत्वांशं परित्यज्य साध्यासामानाधिकरण्याभाववैयधिकरण्याभावनिवेशेनैवोपपत्तेरिति भावः । असामानाधिकरण्याद्यधिकरणत्वाभावस्याखण्डस्यासामानाधिकरण्याद्यभावाघटिततया न वैयर्थ्यमित्यनतिप्रयोजनकत्वेनेत्युक्तम् । तदपहाय चरमाधिकरणत्वांशं परित्यज्य । द्वयम् साध्यासामानाधिकरण्याभावसाध्यवैयधिकरण्याभावरूपनिष्कृष्टलक्षणार्थद्वयम् । साध्यानधिकरणाधिकरणत्वमित्यनेन सत्तावान् द्रव्यत्वादित्यादौ अव्याप्तिवारणाय विवक्षितस्य प्रथमलक्षणनिष्कृष्टार्थस्य कथंचिदपि प्रतिपादनासंभवात्तदनुवादकतानुपपत्ते(त्तिरि)ति यथाश्रुतार्थानुवादपरतया सङ्गमयितुं अनुवदनीयलक्षणार्थद्वयमाह—साध्येत्यादेरिति । लक्षणद्वयस्य क्रमेणेति

कृष्णंभट्टीयं ।

[ अथ सिद्धव्याप्तिलक्षणदूषणम् । ] दीधितौ एकोक्त्येत्यनेन तदुभयमपि तदुभयशब्दप्रतिपाद्यमपि साध्यानधिकरणानधिकरणत्वशब्दप्रतिपाद्यमित्यर्थात्नुवादत्वलाभः। नचानुवादार्थदूषणेऽपि पुरोवादार्थो निर्दिष्ट एवेति वाच्यम् । समनियतानुवादार्थमुखस्य पुरोवादार्थमुखानन्यत्वात् । प्रथमलक्षणेति । साध्यानधिकरणं अनधिकरणं यस्येति विग्रहः । येन यथा असाध्यानि साध्यविरोधीनीति पूर्वपदार्थतावच्छेदकसाध्यविरोधव्यापकत्वलाभः । तथेहापि साध्यवच्छेदव्यापकत्वलाभ आशङ्क्येत । तथासति अनधिकरणमिति प्राथमिकसमासासंभवादित्यनेन । विरोधात् । किंतु साध्यानधिक-

न्यायरत्नं ।

[अथ सिद्धव्याप्तिलक्षणदूषणम् । ] पूर्वनिपातितस्यैव नञ इति । अत्र यथाऽत्यन्ताभावार्थकेन नञा उत्तरपदार्थाभावे विद्यमानं यदव्ययं तत्समस्यत

---

१ मै. पु. अ.

गाद. प. ११

शेषः । तत्राभाव इत्यन्तेन प्रथमलक्षणार्थकथनम् । एवञ्च साध्याधिकरणानधिकरणशब्देन साध्यं यदधिकरणानधिकरणकं तद्बोध्यते । तदुत्तरत्वप्रत्ययेन तस्य साध्यपदोत्तरसन्निविष्टनञा तदभावः प्रत्याय्यत इति प्रथमलक्षणार्थबोधकत्वं साध्यानधिकरणानधिकरणत्वमित्यस्य । नच साध्याधिकरणानधिकरणत्वपदेन नञ्समासे सत्येव

## कृष्णभट्टीय ।

रणमधिकरणं यस्येत्यनेन । नचैवमपि पश्चात्तन्नञ्समासे वक्ष्यमाणरीत्या नञः साध्यनिवेशार्थाधिकरणत्वाभावलाभः सम्भवति । नञो मध्यनिवेशेऽपि भावप्रत्ययान्तबहुव्रीह्यर्थीभूततथाविधाधेयत्वेनैव तदन्वयात् । नत्वधिकरणतया । नञो यद्धर्मावच्छिन्नोपस्थापकपदसमभिव्याहारस्तद्धर्मावच्छिन्नप्रतियोगिताकत्वेनाभावबोधकत्वस्युपपत्ते । तेन दर्शितसमास एव प्रथमाधिकरणपदस्याधेयतानिरूपकार्थत्वमुपगम्य । सत्तावान् द्रव्यत्वादित्यादिस्थलीयाव्याप्तिवारकार्थसम्भवात्प्रथमेत्यसङ्गतमिति न शङ्क्यम् । अथ तर्कालङ्कारमते अनधिकरणमिति प्राथमिकसमासः कथञ्चिदसम्भवतीति चेत् तदा पुरोवादरीत्यैवेदं शशधरानुवादकत्वनियमः । तत्र प्रथमे पुरोवादस्य बहुव्रीहिगर्भबहुव्रीहित्वात्तत्पुरुषगर्भबहुव्रीहित्वमनुवादस्य न युज्यते । बहुव्रीहिगर्भबहुव्रीहित्वेतु सत्तावान् जातेरित्यादावव्याप्तिवारकार्थप्रतिपत्तिः । द्वितीयेच पुरोवादपदस्य तत्पुरुषगर्भबहुव्रीहित्वादनुवादकत्वं । तत्र पुरोवादस्य तथाविधनञ्समासगर्भबहुव्रीहित्वेऽप्यनुवादस्य तथाविधनञ्समासबहुव्रीहित्वोपगमेन, सत्तावान् जातेरित्यादावव्याप्तिवारकार्थलाभ इति प्रथमेत्युपादानं भवति विशेषकं । वस्तुतस्तु अनुवादपुच्छस्य पुरोवादपुच्छसाजात्ये पुच्छदूषणप्रभ्रमः स्यात् । दूषणानौपयिकाभिधानेच विग्रह इति तदविवक्षा तन्मते सुवचैव । प्रथमेत्युपलक्षणं द्वितीयेऽपि द्रष्टव्यमिति । साध्यमधिकरणानधिकरणं यस्येति विग्रहे अधिकरणमाधेयतानिरूपकं यस्येति समस्य नञ्समासरूपमुत्तरपदं । तत्रोत्तरपदस्य सप्तम्यन्धिकार्थाबोधकतया नञो मध्यनिवेशस्यासाधकत्वमेवेत्यन्यत्र शङ्क्ते—न चेति । साध्याधिकरणाधिकरणत्वस्याभावः साध्यानधिकरणानधिकरणत्वमिति नञोऽव्ययी

## न्यायरत्न ।

इत्यर्थकेन 'अव्ययं विभक्ती'त्यादिसूत्रेण सिद्धोऽव्ययीभावः । यदि वा 'सुबन्तेन नञ् समस्यत' इत्यर्थकेन 'नञि'ति सूत्रेण सिद्धस्तत्पुरुषो वाश्रीयते उभयथापि नञ एव पूर्वनिपातस्तस्यैवाव्ययमिति नञिति च प्रथमान्तपदप्रतिपाद्यत्वेन समासशास्त्रे प्रथमान्तशब्दप्रतिपाद्यमुपसर्जनसंज्ञं स्यादित्यर्थकेन 'प्रथमानिर्दिष्टं समास उपसर्जनमि'ति सूत्रेणोपसर्जनसंज्ञत्वात् 'उपसर्जनं पूर्वमिति' पाणिनिनाऽभिधानादिति

तदर्थाभावो नञा प्रत्याययितुं शक्यते । तथाच साध्यपदोत्तरं नञो निपातोऽसंभवी। समस्यमानपदपूर्वनिपतितस्यैव नञः साधुत्वादन्यथा अचित्रगुरित्यादौ चित्रादिपदोत्तरमपि नञ्प्रयोगापत्तेरिति वाच्यम् । ससंबन्धिकार्थबोधकोत्तरपदघटितसमुदायेन सह नञ्समासस्थले नञो मध्यनिवेशस्यापि साधुत्वसंपादकत्वात् । अन्यथा घटानधिकरणत्वं साध्याभाववदवृत्तित्वमित्यादौ घटाधिकरणत्वाभावसाध्याभाववद्वृत्तित्वाभावप्रत्ययानुपपत्तेः। नहि तत्रानधिकरणत्वपदानां घटादिपदैः समासे तादृशार्थप्रतीतिरुपपद्यते। अनधिकरणत्वपदादिजन्यप्रतीतिविशेष्यीभूताभावेन सममेव घटादिसंसर्गभानात्समस्यमानपदप्रतिपाद्यतावच्छेदककोटिनिविष्टेनापरपदार्थान्वये राजपुरुषादन्य इत्यर्थे राजाऽपुरुष इत्यादिसमासापत्तेः। एवं नञान्वयितावच्छेदकावच्छि-

कृष्णंभट्टीयं ।

भावसमासः । ससंबन्धिकत्वं नित्यसाकाङ्क्षितत्वं । विद्यमानो नियतः संबन्धी यस्येत्यर्थात् । संबन्धित्वं जिज्ञास्यत्वं । संबन्धोपस्थितिनियतोपस्थितिकत्वं वा । चैत्रस्य भार्येत्यादौ भार्येत्यादौ घटानधिकरणमित्यादौ अधिकरणपदार्थैकदेशात्मनः भावप्रत्ययार्थादेः चैत्रघटाद्यन्वयात् साध्यनिवेशः। संबन्धिकार्थबोधकपदात्पूर्वस्थानं । जगदीशमतं निराकरोति—नहीति । घटानधीति । घटस्य न अधिकरणमिति त्रिपदसमासस्तु न । अनुशासनाभावात् । तादृशार्थः घटाधिकरणत्वाभावः । घटादिसंसर्गभानादिति । नत्वधिकरणादिनेति । नाभिमतलाभः । समस्येति । अनधिकरणत्वादिपदप्रतिपाद्यतावच्छेदकम् । प्रकृते अधिकरणत्वाभाववत्वादिनि । राजाऽपुरुष इति । राज्ञः अपुरुष इति विग्रहः । एतेन न अधिकरण-

न्यायरत्नं ।

भावः । प्रत्ययानुपपत्तेरिति । तथा चागत्या पृषोदरादिगणपाठकल्पनया पृषोदरादीनि यथोपदिष्टमित्यनेनैव निरुक्तप्रयोगाणां साधुत्वमुपपादनीयमिति भावः । केचित्तु घटानधिकरणत्वमित्यादावधिकरणपदमेव घटाधिकरणलाक्षणिकं घटपदं तु तात्पर्यग्राहककाङ्क्षानिर्वाहकम् । आगमविकरणशब्दादिवत् । एवं सति न प्रायमिकसमासासंभवः । असमानाधिकरणपदस्य यदधिकरणानधिकरणत्वरूपार्थस्य दीधितिकृतस्य न समानमसमानमित्याद्यधिकरणविशेषार्थकसमानपदस्य नञा प्रायमिकसमासमभ्युपेत्यैव वक्तव्यत्वाच्च । नच घटपदमेव घटाधिकरणलाक्षणिकमधिकरणपदं तात्पर्यग्राहकमिति कुतो न स्यादिति वाच्यम् । नञः

१ निपात मै. पु. पा.

न्नाभावस्यैव बोधनादधिकरणसामान्यभेदवानेवानधिकरणपदार्थः स्यात्, तस्य चाप्रसिद्ध्या नञ्पदाधिकरणपदयोः प्राथमिकसमासासंभवाच्चेति। साध्यनिष्ठाधेयत्वानिरूपकाधिकरणवृत्तित्वाभावरूपः प्रथमलक्षणस्य निष्कृष्टयथाश्रुतार्थोऽपि साध्यानधिकरणानधिकरणत्वमिति शब्देन प्रतिपाद्यते। तथाहि। आधेयतानिरूपकार्थकचरमाधिकरणपदघटितेन अधिकरणानधिकरणपदेन अधिकरणमनधिकरणं आधेयतानिरूपकं यस्येति व्युत्पत्त्या अधिकरणनिष्ठभेदप्रतियोगितावच्छेदकनिरूपकताकाधेयतात्वेनान्यपदार्थो बोध्यते। बहुव्रीहौ विग्रहाद्यादृशविशेषणविशेष्यभावापन्नस्य बोधस्तद्विपरीतविशेषणविशेष्यभावापन्नस्य प्रत्ययात्। चित्रा गौर्यस्येति विग्रहवाक्यात् यत्पदार्थसंबन्धित्वेन चित्रगोभिन्नगुरित्यतः चित्रगोनिष्ठसंबन्धप्रतियोगित्वेन यत्पदार्थबोधात्। प्रकृतस्थले च विग्रहवाक्यात् यत्पदार्थनिष्ठाधेयतानिरूपकत्वावच्छिन्नभेदवत्वेनाधिकरणप्रतीतेः। एवञ्च साध्यं यस्याधिकरणानधिकरणकं यदधिकरणनिष्ठभेदप्रतियोगितावच्छेदकीभूत-

कृष्णभट्टीय।

मनधिकरणं घटस्यानधिकरणं घटानधिकरणं तत्राधिकरणपदस्य घटाधिकरणे लक्षणा। घटपदं तात्पर्यग्राहकमित्यपास्तं। तथासति पुरुषपदस्य राजपुरुषे लक्षणा। राजपदं तात्पर्यग्राहकमित्यस्यापि सुवचत्वात्। अप्रसिध्येति। एतेन शब्दशास्त्रप्रणेतापि कटाक्षितः। नच शशशृङ्गादिशब्दपदद्वयमपि समास। "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति ही"ति न्यायादिति वाच्यम्। तत्र ज्ञानशब्देनान्यथाख्यातिरुक्तत्वात्। इह प्रमाणसमासस्यासंभवोक्तेः। अप्रमाणसमासगर्भसमासप्रामाण्यस्यादृष्टचरत्वात्। अप्रसिद्धार्थोपगमनुरोधेन वा तेषां सूत्रप्रणयनं। नैतावता तदनुपगमानुरोधेन नञो मध्यनिवेशो न

न्यायरत्न।

उत्तरपदार्थभेदबोधकत्वव्युत्पत्तिभङ्गापत्तेरिति। न अधिकरणमनधिकरणमिति दर्शितव्युत्पत्त्यैव विवक्षितार्थलाभसंभवे नञो मध्यनिवेशोऽप्रामाणिक एवेति वदन्ति। साध्यनिष्ठाधेयतानिरूपकाधिकरणवृत्तित्वाभावरूप इति। इदमुपलक्षणं साध्यनिष्ठसामानाधिकरण्यप्रतियोगित्वरूपस्याप्यर्थस्य लाभः संभवति। तथाहि साध्येऽधिकरणानधिकरणत्वं यदधिकरणवृत्तित्वाभावो यस्य तत्साध्याधिकरणानधिकरणत्वं भावप्रधानतया तथालाभस्तदभावश्च साध्यपदोत्तरतया बोध्यत इति साध्यनिष्ठसामानाधिकरण्यसंबन्धिताभावलाभः संबन्धश्च प्रतियोगित्वमेवेति। परेतु साध्यनिष्ठाधेयतानिरूपकत्वस्य साध्यवद्भिन्नस्य

१ अन्य का पा

नधिकरणं तत्त्वाभावः । साध्यस्य यदनधिकरणं तद्वृत्तित्वाभावश्चार्थः । तत्र केवलान्वयिनि साध्यनिष्ठाधेयत्वानिरूपका-

---

निरूपताकाधेयतावदिति व्युत्पत्त्या साध्यनिष्ठाधेयत्वानिरूपकत्वावच्छिन्नभेदवदधिकरणवृत्तित्वं साध्याधिकरणानधिकरणशब्देन प्रत्याय्यते । तदभावः साध्यपदोत्तरनञ्पदघटिततद्वाक्येनेति ।

द्वितीयलक्षणार्थमाह—**साध्यस्येति** । तथाच साध्यानधिकरणमधिकरणं आधेयतानिरूपकं यस्येति व्युत्पत्त्या साध्यानधिकरणाधिकरणत्वशब्देन साध्यानधिकरणवृत्तित्वं प्रत्याय्यते । तदभावो द्वितीयनञेति उक्तशब्दस्य एतदर्थानुवादकतेति भावः । पूरणसंवलितं तत्रेति ग्रन्थं व्याचष्टे—**तत्रेत्यादिना** । मूले केवलान्वयिनि वह्निमान्धूमादित्यादौ चाव्याप्तौ हेत्वकथनात् । प्रथमलक्षणे केवलान्वयिन्यव्याप्तिहेतुं पूरयति—**साध्येत्यादिना, अप्रसिद्धेरित्यन्तेन** । साध्यनिष्ठाधेयतानिरूपकसामान्यभेदनि-

कृष्णंभट्टीयं ।

सुमतः । न्यूनतापत्तेः । तेषांपद एव स्वातन्त्र्यात् । अतएवोक्तं साधुवेत्यादि । ननु साध्यानधिकरणेत्याद्यनुवादस्य यदधिकरणानधिकरणं साध्यमित्याद्यर्थप्रतिपादकत्वमुक्तमसंगतं । साध्यनिष्ठाधेयत्वानिरूपकाधिकरणाप्रसिध्येत्यभिमहेत्वप्रसक्तापत्तेः । तस्य साध्यनिष्ठाधेयत्वानिरूपकेत्याद्यर्थाप्रतिपादकतया अप्रसिद्धिकथनस्याकिंचित्करत्वात् । अतस्तादृशानुवादस्य तत्प्रतिपादकत्वं अधिकरणानधिकरणेति व्याससमासभेदेन पदद्वयार्थबोधं दर्शयित्वा साध्याधिकरणानधिकरणेति तद्भेदेन पदद्वयार्थबोधं क्रमेण दर्शयन्नेव दर्शयति—**साध्यनिष्ठेति** । **व्युत्पत्त्येति** । अधिकरणं न अधिकरणं यस्येति त्रिपदबहुव्रीहिः । अन्यथा अनधिकरणपदे प्रसिध्या प्राथमिक समासो न स्यादिति न दोषः । साध्यपदाधिकरणाधिकरणपदयोर्बहुव्रीह्युत्तरं नञ्समासे नञो मध्यनिवेशेन साध्याधिकरणानधिकरणशब्दे तात्पर्यात् । अस्य पदार्थः प्रकृते साध्यरूपः । **हेत्वकथनादिति** । साध्याधिकरणानधिकरण इति शब्दाभा-

न्यायरत्नं ।

वा व्यापकीभूतोऽभावस्तत्प्रतियोग्यधिकरणतासामान्यरूपोऽप्यर्थः साध्यानधिकरणानधिकरणत्वशब्दात्प्रतिपादयितुं शक्यते । तथाहि साध्यान-

---

१ वृत्तित्वेन रूपेण नौकादिरूपान्यपदार्थ. । साध्याधिकरणानधिकरणपदेन तद्वृत्तिधर्मश्च ग्रा. पु. अ.

धिकरणाप्रसिध्या, नानाव्यक्तिसाध्यके च एकसाध्यव्यक्तिनि-

वेशाभिप्रायेणाप्रसिद्धिरभिहिता । यत्किंचिन्निरूपकभेदनिवेशे च साहशभेदवदधिकरणे हेतोर्वृत्तेरव्याप्तिर्बोध्या । वक्ष्यमाणक्रमेण नानाव्यक्तिसाध्यके हेत्वन्तरेऽव्याप्तेः सत्त्वात् धूममात्रे तत्कथनं मूलकृता न्यूनतासपादकमतो धूम इत्यस्योपलक्षणत्वाभिप्रायेण पाठमधृत्वैव व्याचष्टे—नानाव्यक्तिकेति । अत्रच यथासम्भवमव्याप्तिर्बोध्या । तेनैतद्वृत्तियावद्धर्मवानित्वत्वादित्यादौ वक्ष्यमाणरीत्या अव्याप्तिविरहेऽपि न क्षतिः । अतएव नानाधिकरणकसाध्यके सर्वत्रेति

कृष्णंभट्टीय ।

वात् । वक्ष्यमाणेति । एतच्च यत्किंचित्साध्यनिष्ठाधेयत्वनिरूपकत्वमभिप्रेत्य । अन्यथा तदसङ्गतेर्दुर्वारत्वात् । यथा संभवतीति । नानाव्यक्तिसाध्यकहेतुत्वसामानाधिकरण्येनेत्यर्थः । अवच्छेदकावच्छेदेनान्वये बाधकमाह—तेनेति । यद्यपि शब्दवान् गगनत्वादित्यादावपि नाव्याप्ति । तथाप्यप्रिमसिध पदप्रयोजन न तत्रेति तत्त्याग । वक्ष्यमाणरीत्या एकसाध्यव्यक्तिनिष्ठाधेयत्वेत्यादिरीत्या । अतएव नानाव्यक्तिसाध्यक इति प्रन्थस्य सामानाधिकरण्येनाव्याप्तिपरत्वादेव । सर्वत्रेत्यनेन द्वितीयलक्षण एवावच्छेदकावच्छेदेनाव्याप्तिं वक्ष्यति । अन्यथा तत्रापि सर्वत्रेति किं न

व्याख्या ।

धिकरणमधिकरण यस्येति व्युत्पत्तिलभ्र साध्यानधिकरणमित्यस्य साध्यनिष्ठाधेयतानिरूपक साध्यवद्भिन्न मर्थ । अनधिकरण यस्यत्यत्राधिकरणपदम यपदार्थहेत्वधिकरणत्वापरि यस्येति तात्पर्यग्राहकम् । अथवाऽधिकरणपदमाधेयताविशेषनिरूपकरूपाधिकरणे लाक्षणिक तदेकदेशाधेयताविशेषे यस्येति यच्छन्दार्थहेतुनिष्ठत्वस्यान्वय भावप्रधाननिर्देशाधानधिकरणमित्यनेन हेत्वधिकरणत्वाभावलाभ । इत्थं चोद्देश्यतावच्छेदकव्यापकत्वमराति बाधके विधेये भासत इति व्युत्पत्तिबलादेत्वधिकरणत्वाभावरूपे विधेय साध्यानधिकरणत्वरूपोद्देश्यतावच्छेदकव्यापकत्वलाभ इति वदन्ति । यथासम्भवमिति । नानाव्यक्तिसाध्यकहेतुत्वसामानाधिकरण्येनेत्यर्थ । अवच्छेदकावच्छेदेनान्वये बाधकमाह—तेनेति । यद्यपि शब्दवान् गगनत्वादित्यादावपि नाव्याप्तिस्तथाप्यग्रिमविशेषणमिभाय्यधिकरणद्वयवृत्तित्वाव्यतावच्छेदकतयाकस्य नानाव्यक्तिसाध्यकत्वाभिमतिविरहमपि पदप्रयोजन न तत्रेति तत्त्याग । वक्ष्यमाणरीत्या एकसाध्यव्यक्तिनिष्ठाधेयत्वघटितरीत्या । अतएवाद्य नानाधिकरणसाध्यके सर्वत्रेति वक्ष्यतीति । अत्र यथानन्यमनुपूर्व्यां पूर्ववदेव सामानाधिकरण्ये

१ अर्वांगिन्धा पु ना ।

## ष्ठाधेयत्वानिरूपकत्वं साधनाधिकरणव्यक्त्यन्तरस्येत्यव्याप्तिः । कचिद्व्यभिचारिण्यतिव्याप्तिश्चाद्ये । द्वितीये च साध्यवैयधिकरण्ये यदि साध्यवत्त्वावच्छिन्नप्रतियोगिताको बोधो विवक्षितः तदा

---

यद्यपति । यद्वा नानाधिकरणकसाध्यकेत्यस्य मिथो व्यधिकरणद्वयवृत्ति-साध्यतावच्छेदककइत्यर्थः । अत्राव्याप्तेर्हेतुं पूरयति—एकेत्यादिना इतीत्यन्तेन ।अनया रीत्याऽव्याप्तिश्च । यत्किचित्साध्यनिष्ठाधेयतानिरू-पकत्वावच्छिन्नभेदनिवेशाभिप्रायेण साध्यनिष्ठाधेयतानिरूपकसामा-न्यभेदनिवेशे च केवलान्वयिन्यव्याप्तिरेव दोष इति ध्येयम् । कचिदि-ति। पृथिव्यन्यत्वविशिष्टद्रव्यत्ववान्द्रव्यत्वादित्यादौ। अतिव्याप्तिरिति। विशिष्टद्रव्यत्वस्य द्रव्यत्वानतिरेकितया पृथिव्यादेः साध्यनिष्ठाधेय-त्वानिरूपकत्वासंभवादितिभावः । आधेयतायां साध्यतावच्छेदकाव-

कृष्णंभट्टीय ।

च्छेदेदिति भावः । उद्देश्यतावच्छेदकावच्छेदो न विधेयान्वयस्यौत्सर्गिकस्य रक्षणायेत्याह—यद्वेति । मिथ इति । यत्किंचित्साध्यप्रतियोगिकाभावाधि-करणं यत्किंचिद्यत्साध्यवद्यत्किंचित्साध्यप्रतियोगिकाभावसमानाधिकरण य-त्किंचित्साध्य तदुभयवृत्तित्वं वृत्तित्वान्तार्थः । तत्र च सत्ता द्रव्यत्वपृथि-वीत्वान्यतमवान् जलत्वादित्यादौ अव्याप्त्यलाभस्त्यूनतेति चेन्न । यत्किंचि-त्साध्यप्रतियोगिताकाभावाधिकरणीभूतहेत्वधिकरणवृत्तिसाध्यतावच्छेदकव-त्त्वस्य समुदायार्थत्वात् । यत्किंचिदिति निरूपकत्वेन्वेति। अत्र विशिष्टधर्मावच्छि-न्नाधेयतायाः अनतिरिक्तत्वात्साध्यतावच्छेदकावच्छिन्नत्वनिवेशवैयर्थ्यमिति मतनिराकरणायाह—आधेयतायामिति । यत्किंचिदं व्यक्तावन्येति।

न्यायरत्नं ।

नान्वयभ्रम स्यादित्याशय इति केचित् । अत एव सर्वेनेति वक्ष्यतीत्यर्थस्तथा चात्र इवेहाप्यवच्छेदकावच्छेदेनान्वयस्य विवक्षितत्वेऽत्रापि सर्वेनेति पठेदि-त्यपरे । मिथो व्यधिकरणद्वयवृत्तिसाध्यतावच्छेदक इति । यद्यपि मिथो व्यधिकरणत्वं न परस्परानधिकरणवृत्तित्वं भूतत्वाभावमूर्तत्वाभावान्य-तरवान् गुणत्वादेरप्युद्देश्यतावच्छेदकाक्रान्ततया तत्राव्याप्तिरूपविधेयाभावेन बाधापत्ते । नापि परस्पराधिकरणावृत्तित्वं । तादृशान्यतरसाध्यकमनस्त्वहेतोर-सम्ग्रहापत्ते । एतेन परस्परानधिकरणद्वयाधिकरणवृत्तित्वमपि निरस्तम् । तथापि

---

१ अधिकरणत्व का. पा. । २ प्रसंग. का. पा. ।

**केवलान्वयिनि यदि च यत्किंचित्साध्यवद्व्यक्तिभेदः तदा नानाधिकरणसाध्यके सर्वत्राव्याप्तिः ॥ इति दीधितौ सिंहव्याघ्रलक्षणे ॥**

---

च्छिन्नत्वनिवेशेच नैष दोषः । अधिकरणतानिरूपकतावच्छेदकस्यैव आधेयतावच्छेदकतया पृथिवीनिष्ठाधिकरणतानिरूपकतानवच्छेदकपृथिव्यन्यत्वविशिष्टद्रव्यत्ववत्त्वादेः पृथिवीनिरूपिताधेयतानवच्छेदकत्वादिति ध्येयम् । द्वितीयलक्षणे साध्यवत्त्वावच्छिन्नप्रतियोगिताकभेदनिवेशे धूमांशे नाव्याप्तिरेव। यत्किंचित्साध्यवद्व्यक्तिभेदनिवेशे च उभयस्थल एवाव्याप्तिरिति । मूलाभिप्रायं स्फुटयन्ति—**द्वितीयेचे-त्यादिना** । साध्यवत्तावच्छिन्नप्रतियोगिताकभेदः साध्यवैयधिकरण्ये विवक्षितः । साध्यवैयधिकरण्यघटकतया विवक्षित इत्यर्थः । **केवलान्वयीति** । केवलान्वयिन्येव । **नानाधिकरणकेति** । एकव्यक्तिसाध्यके सत्तावान्द्रव्यत्वादित्यादौ एकस्य साध्यवतो भेदस्यान्यस्मिन्साध्यवति सत्त्वादव्याप्तेः नानाव्यक्तिसाध्यकेऽपि एतद्वृत्तिद्धर्मवानेतत्त्वादित्यादौ अव्याप्त्यसम्भवात्ताननाव्यक्तिसाध्यकेति

कृष्णभट्टीय ।

तथाच साध्यवत्तव्यक्तित्वावच्छिन्नभेद इत्यर्थ । तेन नासंभव । **मूलेति** । यद्यपि तत्रेति वा दलस्य केवलान्वयिन्यव्याप्तिः साध्यवत्त्वावच्छिन्नभेदनिवेशपक्ष एव । तथापि धूमेचेति चकारेण तन्नेत्यस्यानुषङ्गाय किंचित्त्वनिवेश-

न्यायरत्न ।

यत्किंचित्साध्यानधिकरणहेत्वधिकरणवृत्तित्वे तात्पर्यान्न दोष । **अधिकरण निरूपकतावच्छेदकस्यैवेति** । अत्र जगदीशमथुरानाथौ विशिष्टसत्ता गुणवृत्तिरिति धी भ्रमैव विशिष्टसत्तात्वान्गुण इति धीरप्रमैवेति स्वानुभवानुसारेण कल्पयन्तौ विशिष्टसत्ताव गुणनिष्ठाधिकरणतानिरूपकतानवच्छेदकमपि गुणनिरूपिताधेयतावच्छेदक भवत्येवेति मन्येते । गदाधरास्तुविशेषेण दर्शितधीद्वयस्याप्रमात्व मन्यमाना विशिष्टसत्तात्वस्य गुणनिरूपिताधेयतावच्छेदकत्व न क्षमन्त इति ध्येयम्। नानाव्यक्तिकेति नोक्तमिति । अथैवमप्यत्र गतत्रेति पदं किमर्थं पूर्ववदत्र यथासंभवमव्याप्त्यापि निर्वाहात् । अत्र सत्यप्यनुक्त्यां द्वितीयस्य

---

१ साध्यवत्त्वावच्छिन्ने केवलान्वयिसाध्यकाव्याप्तिरेव क० पा०।

नोक्तम्। तथाच द्वितीयलक्षणाभिप्रायेण धूम इति मूलं नानाधिकरणसाध्यकसामान्योपलक्षणमिति भावः। इति सिंहव्याघ्रलक्षणदूषणम्।

कृष्णंभट्टीयं।

ककल्पे यत्किंचित्साध्यानधिकरणानधिकरण इत्युभयत्रैव हेतुरिति भावः। अव्याप्तेरिति। संभवेन न्यूनतापत्तेरिति शेषः।

इति कृष्णंभट्टीये सिंहव्याघ्रलक्षणविवरणम्॥

न्यायरत्नं।

वैकल्पिकस्यार्थस्य केवलान्वयिभिन्न एव नानाधिकरणसाध्यकेऽव्याप्तिरिति भ्रमः स्यादतः सर्वेनेति वक्तव्यं। एतत्सूचनायैव सर्वेनेत्यस्य केवलान्वयिनि व्यतिरेकिणि चेति भवानन्दादीनां व्याख्यानमिति चेन्न। एवं सति नानाव्यक्तिक इति पूर्वग्रन्थेपि सर्वेनेति वक्तव्यं स्यात्। अन्यथा प्रथमलक्षणीयद्वितीयवैकल्पिकार्थस्याव्याप्तेस्तत्र सत्वेन तदकथनेन न्यूनतासाम्यात्। मैवं नानाव्यक्तिसाध्यके चेति चकारेण केवलान्वयिनोऽपि समुच्चयात्सर्वेनेति तत्रानुक्तावपि न्यूनताविरहात्। नन्वत्रापि सर्वेनेति स्थाने चकारं पठित्वा केवलान्वयिसाध्यकसमुच्चय कुतो न कृतः वैरूप्यस्यान्याय्यत्वादितिशङ्क्यम्। उपायस्योपायान्तरादूषकत्वात्। अथ नानाव्यक्तिकेत्यस्य स्थाने नानाधिकरणकेति कुतो नोक्त द्रव्य पृथिवीत्वादित्यादौ पूर्वलक्षणस्याव्याप्तिविरहेऽपि यथासंभवमव्याप्तौ तात्पर्यस्य वक्तुं शक्यत्वादिति चेन्न। पूर्वलक्षणे साध्याधिकरणनानात्वं नाव्याप्तिप्रयोजकं। किंतु साध्यनानात्वमित्याशयेन पूर्वं नानाव्यक्तिसाध्यकेत्युक्तं। तदपि एतद्वृत्तियावद्धर्मसाध्यके व्यभिचारेण यथाश्रुतं न प्रयोजकमिति मिथ इत्यादिरीत्या पारिभाषिकं तदनुमतमिति ध्येयम्॥ इति सिंहव्याघ्रलक्षणदूषणं समाप्तम्॥

# अथ सार्वभौमपरिष्कारः ।

केचित्तु । साध्येति । साध्यासामानाधिकरण्यं हेतुताव-च्छेदकसंबन्धेन हेत्वधिकरणे, तेनैव संबन्धेन साध्यवद्वृत्तित्वा-

साध्यासामानाधिकरण्यानधिकरणत्वमित्यत्र साध्यासामानाधिकरण्यपदेन साध्याधिकरणवृत्तित्वाभावविवक्षणेपि द्रव्यं सत्वादित्यादावतिव्याप्तिर्न संभवति। सामानाधिकरण्यस्याव्याप्यवृत्तितया सत्तादावपि गुणाद्यवच्छेदेन द्रव्यत्वादिसामानाधिकरण्याभावसत्वात् । किंतु वह्निमान्धूमादित्यादावव्याप्तिः । स्वावयवावच्छेदेन धूमादावपि वह्न्यादिसामानाधिकरण्याभावासत्वात्। सापि हेतुतावच्छेदकसंबन्धेन यद्धेतुमत्तदवच्छिन्नत्वेनाभावं विशेष्य वारयितुं शक्यत इत्यभिप्रायेण तत्पदं तादृशाभावपरं वर्णयतः सार्वभौमस्य मतमुपन्यस्यति ।

केचित्त्विति । हेत्वधिकरण इति । सप्तम्यर्थो भावान्वेय्यवच्छिन्नत्वम्। तेनैव संबन्धेनेति । तृतीयार्थोऽपि वृत्त्यन्वितमवच्छिन्नत्वम्। वृत्तिपदस्य संबन्धार्थकत्वे तु अभेद एव तदर्थः । अनधिकरणत्वपदस्याधिकरणत्वाभावः अभावमात्रं वा यदर्थः स्यात्तदा

कृष्णभट्टीयं ।

## अथ सार्वभौमपरिष्कारप्रारम्भः ।

हेतुमदिति । यत्किंचित्पदार्थेऽवच्छिन्नत्वे संयोगेन शैवालादिमद्धृदावच्छेदेन तृणादिमत्स्वावयवावच्छेदेन च धूमे वह्निसामानाधिकरण्याभावसत्वादव्याप्तिरतो हेतुपदं । अभावमात्रमिति । चरमाधिकरण्यांशन्यायस्य ।

## अथ सार्वभौमपरिष्कारविवरणम् ।

यद्धेतुमदिति । यत्किंचित्पदार्थवदितियुक्तौ तृणादिमत्स्वावयवावच्छेदेन वह्निसामानाधिकरण्याभावस्य धूमादावक्षतत्वात्तद्दोषवारणमसम्भवमतो हेतुनिवेशः । धूमे पर्वते न वह्निमत्वं युक्तमिति प्रतीतेरधिकरणभेदेन तत्तद्धूमनिष्ठातिरिक्ताधिकरणतायामेव पर्वतावच्छिन्नत्वमानमनुगम्य धारणाभवावपर्वतावच्छिन्नत्वनिष्ठत्वाभावानिरूपितविलक्षणाधिकरणताभ्युपगमो व्यर्थ इत्यभिप्राये-

---

१ कनिन का पा.

(सा)भावस्तदधिकरणभिन्नत्वमर्थः । तेन धूमस्य स्वावयवे सं-

---

अव्याप्यवृत्त्यधिकरणताया अप्यव्याप्यवृत्तितायाः सत्तादौ द्रव्याद्यवच्छेदेन साध्यासामानाधिकरण्याभावाधिकरणत्वाभावस्य सामानाधिकरण्यरूपतदभावाभावस्य चाक्षत्वादतिव्याप्तिस्तदवस्थैवत्यनधिकरणपदं अधिकरणभेदवदर्थकतया व्याकरोति—तदधीति । यद्यपि अधिकरणभेदेनाभावभेदाभावात्संयोगादिना धूमाद्यधिकरणपर्वताद्यवच्छिन्नो यः संबन्धान्तरेण तद्वृत्तिरूपादिनिष्ठवह्न्यादिमत्संयुक्तत्वाभावः तस्यैव स्वावयवावच्छेदेन धूमादौ वर्तमानतया धूमादेस्तादृशाभावानधिकरणत्वं दुर्घटम् । तथापि तादृशहेत्वधिकरणावच्छिन्नत्वविशिष्टाभावानधिकरणत्वस्यैव विवक्षणीयतया न दोषः । रूपे पर्वते न वह्निमत्संयुक्तत्वमितिवत्, धूमे पर्वते न वह्निमत्संयुक्तत्वमिति प्रतीत्यनुदयात्पर्वतत्वावच्छिन्नत्वविशिष्टनिरूपितायाः वह्निमत्संयुक्तत्वा(व)भावीयविलक्षणाधिकरणताया रूपादावेवोपगमात् । अभावाधिकरणतायामेव वाधिकरणविशेषावच्छिन्नत्वं निवेशनीयम् । तावतापि धूमरूपयोरभिन्नस्याप्यभावस्य परस्परानवच्छेदकावच्छिन्नाधिकरणताभेदेन कथितदोषनिराकरणसंभवात् । उभयत्र हेतुतावच्छेदकसंबन्धनिवेशप्रयोजनं क्रमेण दर्शयति—तेनेति । स्वावयवे

कृष्णंभट्टीयं ।

त्यागमभिप्रेत्य । अधिकरणभेदवदिति । भेदस्तु नाव्याप्यवृत्तिरिति भावः । नन्विदमयुक्तं । विशिष्टानतिरिक्ततापक्षे साध्याघटितमूर्त्तेर्विशिष्टाद्वयोरप्यवस्तुनोऽनधिकरणत्वस्य साध्यनिरूपितव्याप्तित्वासंभवात् । तच्छब्दबोध्यस्य साध्यसामानाधिकरण्याभावात्मकत्वात् हेत्वधिकरणावच्छिन्नत्वस्याधिकरणतानिरूपकतावच्छेदकत्वे मानाभावाद्गौरवाच्चेत्यत आह—

न्यायरत्नं ।

णाह—अभावाधिकरणतायामेव वेति । यद्यपि पूर्वकल्पे विशिष्टाधिकरणतानिवेशो व्यर्थः । सार्वभौममते विशिष्टातिरिक्तत्वाद्धेत्वधिकरणावच्छिन्नत्वविशिष्टानधिकरणत्वनिवेशादेवाव्याप्तिवारणसंभवात् । तथापि मतद्वयसाधारण्येन तन्निवेशो बोध्यः । परस्परेति । यथा रूपनिष्ठायां तदधिकरणतायां स्वावयवो नावच्छेदकस्तथा धूमनिष्ठतदधिकरणतायां पर्वतो नावच्छे-

सयोगेनावृत्तावपीत्यन्वयः । तथाच स्वावयवावच्छेदेन साध्यवत्सयु-क्तत्वासत्वेन तदभावस्याक्षततया प्रथमतो हेतुतावच्छेदकसम्बन्धा-निवेशे स्वावयवरूपस्वाधिकरणावच्छिन्नसाध्यवत्सयुक्तत्वाभावान-धिकरणत्वविरहेण सयोगेन धूमहेतौ कस्यापि साध्यस्य व्याप्तिर्न स्यादिति भावः । यद्यपि तादृशसबन्धनिवेशेऽपि वह्निमत्सयुक्तत्वादेः कालिकाव्याप्यवृत्तितया धूमादावुत्पत्तिकालावच्छेदेन वह्निमत्सयुक्त-त्वाभाववृत्तेः पर्वतादेरपि कालोपाधितया तादृशाभावावच्छेदक-त्वादव्याप्तितादवस्थ्यम्, तथापि इदानीमिति प्रतीतिनियामक-कालस्यावच्छेदकत्वादिहेति प्रतीतिनियामकदेशनिष्ठावच्छेदकताया वैलक्षण्य दुरपह्नवम् । यदभावात्पर्वते धूमे न वह्निमत्सयुक्तत्वमिति

कृष्णभट्टीय ।

अभावापीति । पर्वतेति । यथा रूपनिष्ठाया तदधिकरणताया स्वावय-वो नावच्छेदक तथा धूमनिष्ठायां तदधिकरणताया पर्वतो नावच्छेदक इ-त्यर्थ । कस्यापीति । वह्निमतोऽत्यसासबन्धसूचनाय । इदानीं धूमे न वह्निमत्सयुक्तत्वमिति प्रतीतिरत्र प्रमाण । ननु तत्र पर्वत इति देशत्वेन पर्व तान्तर्भाव इत्याशयेन कालोपाधिविधयेति वैलक्षण्यानुपगमे बाधकमाह— यदिति । यत्पद विलक्षणावच्छेदकतापर । कालविधयाऽवच्छेदकताया देशविधयाऽवच्छेदकतावैलक्षण्यानुपगमे पर्वतरूपकालस्य धूमनिष्ठसाध्यसा-मानाधिकरण्याभावावच्छेदकतया पर्वते धूमे न वह्निमत्सयुक्तत्वमिति प्रती-त्यापत्ति । तथा विलक्षणावच्छेदकताविरहस्येत्यर्थ । तादृशावच्छेदकतयो-र्भेदे किं प्रमाणमित्याशङ्कानिराकरणाय इदानीमिति । प्रतीतिनियाम-केति । इहेति प्रतीतिनियामकेति चोक्त । तेन कालविधयावच्छेदक-तात्वादिक चाखण्डोपाधि । तदवच्छिन्न कालत्वादिभाननियतभानकमिति लभ्यते । यत्तु इदानीमिति प्रत्ययनिरूपितकालनिष्ठविषयतानिरूपितविषय त्वाभाव एव वैलक्षण्यमिति । तन्तुच्छ । इहेदानीमिति विभिन्नप्रतीत्योर्विष यभेदासिद्धौ प्रतिनियतविषयता तदभावरूपवैलक्षण्यासिद्धे । विभिन्नप्रत्य-यस्य प्रमाणस्य तद्विषयत्वतदभावरूपवैलक्षण्यासाधकत्वाच्च । नहि घट घट इत्यादिप्रत्ययानां स्वविषयत्वतदभावादिविषयत्वम् । अनुव्यवसायस्यैव तथात्वादिति । अत्र धूमनिष्ठसाध्यसामानाधिकरण्याभावीया देशविधया अव-

न्यायरत्न ।

दक इत्यर्थ । कालोपाधितयेति । कालत्वेनेत्यर्थ । एतेन पर्वतस्य तादृशाभावावच्छेदकत्वे इदानीमित्यादिप्रतीतिरेव नियामिका । न त्विह पर्वते इत्यादिप्रतीतिरिति सूचितम् । वैलक्षण्यमिति । अखण्डोपाधिरूपमिति

प्रत्ययाभावः । हेतुमन्निष्ठतादृशावच्छेदकतानिरूपकत्वमेव निवेश्यमतो न दोषः । नच कालोपाधेरवच्छेदकतायां अवच्छेद्याधिकरणेनावच्छेद्यस्य कालिकसंबन्धो अवच्छेदकतानियामकः । इत्थंच तादृशसंबन्धानवच्छिन्नत्वमेव देशस्यावच्छेदकतायां वैलक्षण्यं, अन्यस्य दुर्वचत्वात् । तथाच व्यभिचारिणि कालिकसबन्धेन हेतौ

कृष्णभट्टीय ।

च्छेदकता तदीयकालविधया अवच्छेदकतातो विलक्षणा कालत्वादिविषयकप्रमाविषयधूमनिष्ठवह्निमत्संयुक्तत्वाभावावच्छेदकतात्वादिति प्रयोग । तेन पर्वते धूमे न वह्निमत्संयुक्तत्वमिति प्रत्ययासिद्धावपि न क्षते । अथवा पर्वतादौ देशविधयाऽवच्छेदकत्वस्याभावात्तत्र तादृशावच्छेदकताविषयकप्रत्ययाभाव तादृशावच्छेदकताविषयतानिरूपितविषयतासबन्धावच्छिन्नधूमनिष्ठवह्निमद्वृत्तित्वप्रत्ययाभावो वा । विशेष्यैतद्वृत्त्वस्य प्रमात्वविशिष्टतद्वृत्ताज्ञाननियामकत्वादिति ऋजुः पन्थाः । व्यभिचारिणि कालिकसंबन्धेन हेताविति । संयोगेन वह्निमान्कालिकेन धूमवदित्यादिव्यभिचारिणीत्यर्थ. । व्यभिचारनिरूपकहेत्वधिकरणीभूतहृदाद्यवच्छेदेन वह्निमन्निरूपितकालिकसंबन्धावच्छिन्नवृत्तित्वाभावस्य हेतौ सत्त्वेऽपि तस्य हेत्वधिकरणीभूतहृदनिष्ठकालिकसंबन्धावच्छिन्नावच्छेदकताकत्वनियमेन न लक्षणघटकता । किंतु हृदाद्यवच्छेदेन हृदसमवेतरूपादावेव तादृशाभावस्य प्रसिद्धिरिति तद्विशयस्य हेतौ सत्त्वादतिव्याप्ति । नच धूमावयवावच्छेदेन कालिकसबन्धावच्छिन्नतथाविधवृत्तित्वाभावस्यैव हेत्वधिकरणीभूतो य स्वावयव. तन्निष्ठसमवायसंबन्धावच्छिन्नावच्छेदकताकत्वान्नातिव्याप्त्यवकाश इति वाच्यम् । एवमपि समवायेन पृथिवीत्ववान्कालिकेन घटत्वादित्यादौ निरवयवे व्यभिचारिणि विपक्षीभूतजलसमवेतरूपस्यैव तादृशसाध्यवद्वृत्तित्वाभावाधिकरणतया हेतोस्तद्विशत्वादतिव्याप्तेः । नच तत्रापि जन्यज्ञानावच्छेदेन साध्यवद्वृत्तित्वाभावसत्त्वान्नातिव्याप्तिरिति वाच्यम् । तथाप्येतत्क्रियाभिन्नं कालिकेन घटादित्यादावतिव्याप्ते. । तत्रैतत्क्रियाया एव व्यभिचारनिरूपकाधिकरणतया तस्याः कालिकेनैव हेतुनिष्ठसाध्यवद्वृत्तित्वाभावस्यावच्छेदकतया हेतुनिष्ठतादृशवृत्तित्वाभावो न लक्षणघटक. । किंतु क्रियात्व एवेत्यतिव्याप्ति । एवं महाकालभिन्नं कालिकेन कालभेदात्, स्पन्दान्यो घटत्वात्, प्रलयभिन्न कालिकेन गोत्वादित्यत्राप्यतिव्याप्ति. । महाकालादौ हेतो. कालिकेतरसंबन्धाप्रसिद्धेरित्याशयात् । कालभेदवान् कालिकेन कालभेदादित्यादौ विरुद्धे साध्यवन्निरूपितकालिकसंबन्धावच्छिन्नवृत्तित्वाप्रसिद्धेरुक्तं व्यभिचारिणीति । कालिकादीत्या

न्यायरत्नं ।

दोषः । प्रकारान्तरेण वैलक्षण्यमाशङ्क्य निराकुरुते—नचेति । व्यभिचारि-

वर्तमाने साध्यसामानाधिकरण्याभावे व्यभिचारनिरूपकाधिकरणीयावच्छेदकतायां कालिकसंबन्धानवच्छिन्नत्वविरहादतिव्याप्तिरिति वाच्यम् । कालिकव्याप्यवृत्तावपि कालिकसंबन्धघटितात्मत्वाकाशत्वादिसामानाधिकरण्ये दैशिकसंबन्धेनात्मत्वानधिकरणकालस्य दैशिकविधयैवावच्छेदकत्वात् । कालविधया तस्यावच्छेदकत्वे तादृशसामानाधिकरण्यस्य कालिकाव्याप्यवृत्तित्वापत्तेः कालिकसम्बन्धानवच्छिन्नत्वादन्यस्यैव वैलक्षण्यस्य देशविधया अवच्छेदकतायां स्वीकरणीयत्वात् । हेत्वधिकरण इत्यत्र हेतुपदं अधिकरणभिन्नत्वानुयोगितत्तद्धेतुपरम् । अतो धूमाद्यन्तरसंयु-

कृष्णंभट्टीयं ।

दिना संबन्धसामान्यपरिग्रहः । कालिकव्याप्यवृत्तौ । कालानवच्छिन्ने । दैशिकसंबन्धेनात्मत्वाद्यनधिकरणकालस्येति च कालिकसंबन्धेनैव अवच्छेद्याधिकरणसंबन्धित्वं वक्तुं युक्तं । तथाचात्मत्वसामानाधिकरण्यावच्छेदको यः कालस्तन्निष्ठावच्छेदकतायाः कालिकसंबन्धावच्छिन्नत्वेऽपि तस्य देशविधयैवावच्छेदकतारूपत्वमिति तात्पर्यं । इह घटे आकाशत्वे आत्मत्वसामानाधिकरण्यमिति प्रत्ययादिति । कालिकाव्याप्यवृत्तित्वापत्तेरिति । तत्कालान्यायरत्नं ।

नीति । महाकालभिन्नो घटत्वादित्यादावित्यर्थं । नच महाकालावच्छेदेन महाकालान्यवृत्तित्वाभावस्य महाकालवृत्तिवृत्तितया कालिकसंबन्धावच्छिन्नताद्यधिकरणत्वाप्रसिद्ध्यैव नातिव्याप्तिरिति शक्यम् । महाकालपरिमाणनिष्ठनाद्याधिकरणताया महाकालस्य कालिकसंबन्धेनेव समवायेनाप्यवच्छेदकत्वसमवायसमवायावच्छिन्नाधिकरणताया कालिकसम्बन्धानवच्छिन्नत्वप्रसिद्धिसौलभ्यात् । कालिकव्याप्यवृत्तावपीति । आकाशत्वे इदानीमात्मत्वसामानाधिकरण्यं न तदानीमिति प्रत्ययाभावादिति भाव । यद्यपि व्याप्यवृत्तावित्यस्य सामानाधिकरण्ये इति क्लीवविशेषणत्वात्क्लीवत्वमपेक्षितमिति व्याप्यवृत्तिनीत्येव वक्तुमुचितम् । तथापि व्याप्यवृत्तिपदे व्याप्या निरवच्छिन्ना वृत्तिर्यस्येति विग्रहा"तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्येति" सूत्रेण तृतीयादिविभक्तौ परत पुरुषसाधारणप्रवृत्तिनिमित्तकशब्दस्य पुंवद्भावविधानात्प्रकृते व्याप्यवृत्तिशब्दप्रवृत्तिनिमित्तस्य निरवच्छिन्नवृत्तित्वस्य पुरुषसाधारण्यात् पुंवद्भावानुपपत्तिरिति ध्येयम् । दैशिकसंबन्धेनात्मत्वानधिकरणेति । एतेन कालिकसम्बन्धातिरिक्तसम्बन्धेन तस्यावच्छेदकत्वाभाव सूचित. । कालिकाव्याप्यवृत्तित्वापत्ते-

१ सम्बन्धान्तरेण वर्तमानप्रमेयत्वादिनिष्ठप्रत्याद्यवच्छेदसाध्यसामानाधिकरण्यावच्छेदकताया एव तादृशत्वाभावदशाभावाधिकरणे प्रमेयत्वादिभिन्नत्वस्य सत्त्वादिति । २ वैयधिकरण्य ।

त्कालावच्छेदेन धूमादेस्तादृशाभावसत्त्वेऽपि न क्षतिः। एवंच व्याप्तेः प्रतिधूमादिकं भिन्नत्वेऽपि केनापि रूपेणानुगतानां

कृष्णभट्टीयं।

वच्छिन्नत्वस्य तदन्यकालावच्छेदेन तद्वद्वृत्त्यभावप्रतियोगित्वव्याप्यतया तदुपगमे तादृशप्रतियोगित्वापत्तेरित्यर्थः। तद्देशावच्छिन्नत्वंतु न तदन्यदेशावच्छेदेन तद्वद्वृत्त्यभावप्रतियोगित्वव्याप्यं। क्षेयत्वादौ घटाद्यवच्छिन्नवाच्यत्वसामानाधिकरण्यं तदन्यदेशावच्छिन्नवद्वृत्त्यभावप्रतियोगित्वस्यासत्त्वादिति न दैशिकाव्याप्यवृत्तित्वापत्तिः। ननु व्याप्तेस्तत्तद्व्यक्तित्वरूपत्वे धूमत्वादेर्व्याप्यतावच्छेदकत्वं न स्यात्। व्याप्यघटकत्वात्। प्रत्येकं तत्तद्व्यक्तिस्वरूपव्याप्यनिरूपितवृत्तित्वाद्येतत्त आह—एवंचेति। तत्तद्व्यक्तित्वाव्यतमत्वं तावत्तद्विषयकज्ञानव्यक्तिरेववा विशेष्यतासंबन्धेन अनुगमकं रूपं। नचैवमपि द्रव्यवान् संयोगेन प्रमेयादित्यादौ प्रमेयत्वस्यमनतिप्रसक्तमेवेति वाच्यं। स्वविशिष्टव्यापक-

न्यायरत्नं।

रिति। तत्कालावच्छिन्नत्वस्य तदन्यकालावच्छेदेन तद्वृत्त्यभावप्रतियोगित्वव्याप्यत्वात्तदुपगमे तादृशप्रतियोगित्वापत्तेरित्यर्थ इति केचित्। वस्तुतस्तु आकाशत्वमिदानीमत्वसमानाधिकरणमिति प्रतीतिवदाकाशान्तर्भावेणाकाशत्वमात्मत्वसमानाधिकरणमिद् नेति प्रतीतिरप्यनुभवसिद्धा। तत्र प्रथमप्रतीतौ कालिकसंबन्धावच्छिन्नरूपं कालविधयाऽवच्छेदकत्वं यदि भासते तदा नेदानीमिति प्रतीत्यापत्तेरिति भावः। धूमाद्यन्तरसंयुक्तेति। यद्यपि स्वावयवसंयुक्तधूमादौ तादृशाभावानधिकरणत्वसंभवात् हेतुपदस्य तद्धेतुपरत्वं युक्तं। तथापि धूमवान्वह्नेरित्यादौ पर्वतीयवह्नौ तादृशाभावानधिकरणत्वमादायातिव्याप्तेर्वारणाय हेतुतावच्छेदकावच्छेदेन तदनधिकरणत्वविवक्षणावश्यकत्वादुक्तं तद्धेतुपरत्वं हेतुपदस्य। ननु हेतुपदस्य तद्धेतुपरत्वे व्याप्तेस्तत्तद्व्यक्तिरूपतापरत्वे न कस्यापि तद्व्यक्तित्वस्याऽनतिप्रसक्तं धूमत्वमिति धूमत्वस्य व्याप्यतावच्छेदकत्वं न स्यात् चेष्टापत्तिः। धूमत्वावच्छिन्नहेतुकानुमितेरपलापापत्तेर्धूमादित्यादिन्यायप्रयोगासङ्गत्यापत्तेश्चेत्यत आह—एवं चेति। केनापि रूपेणेति। अन्यतमत्वादिनेत्यर्थः। धूमत्वादिकमवच्छेदकमिति। तावत्तत्तद्व्यक्तित्वान्यतमत्वावच्छिन्नानतिप्रसक्तस्य धूमत्वादेर्व्याप्यतावच्छेदकत्वं निरावाधं। तावद्व्यक्तीनां स्वप्रतियोगिवृत्तित्वस्वसमानाधिकरण्योभयसंबन्धेन भेदविशिष्टान्यत्वरूपानुगततद्व्यक्तित्वस्वरूपसामान्यप्रत्यासत्त्या ज्ञातुं शक्यत्वात् दुर्ज्ञेयतापीति भावः। अथैवमपि सत्तावान्समवायेन प्रमेयादिति प्रयोगानुपपत्तिरसमवेतप्रमेयस्य निरुक्तव्याप्यघटकत्वेन प्रमेयत्वस्य समवेतप्रमेयनिष्ठतत्तद्व्यक्तित्वान्यतमत्वावच्छिन्नातिप्रसक्ततया तदवच्छेदकत्वविरहादिति चेन्न। तादृशान्यतमत्वावच्छिन्नानतिप्रसक्तशब्देन तादृशान्यतमत्वं हेतुतावच्छेदकसंबन्धप्रतियोगिनि यद्धर्मविशिष्टे वर्तमानाभावप्रतियोगितायामनवच्छेदकं तत्त्वस्य विवक्षितत्वात्। अनुगतव्याप्तिं वदता

तासा धूमत्वादिकमवच्छेदकम् । यत्तु हेतुपद हेतुतावच्छेदकाव-

कृष्णभट्टीय ।

च्छेदकतावच्छेदकतादृशरूपकत्वेनैव तस्याप्यवच्छेदकत्वात् । व्याप्तिघटकस्य तु तावच्छेदकताया तत्रेति धूमत्वादित्यादौ न तदसिद्धि । धूमवान्वह्नेरित्यादौ साध्यसमानाधिकरणहेतौ व्याप्तिसत्त्वेपि वह्नित्वादेर्हेतुताव च्छेदकस्य तावच्छेदकत्वमित्यवच्छेदकाङ्गीकारफलं । हेतुपदमिति । ग्रन्थकारमते नानाव्यक्तिहेतुके हेतुव्यक्तिभेदाद्व्याप्तिभेद नत्वेतन्मत इत्येतावन्मात्रप्रदर्शनाय हेत्वधिकरणावच्छिन्नत्वविशेषणवैयर्थ्यात् । अथवा हेत्वधिकरणावच्छेदेनैवेति एवप्रकार पूरणीय । हेतुतावच्छेदकावच्छिन्नत्व च स्वानुयोगिकत्वरूपमग्रे विवक्षणीयमिति प्रथमतो यथाश्रुतार्थाभिधान । एवञ्च स्वानुयोगित्वादेर्विशेषणीयत्वादित्यन्तस्य हेत्वधिकरणावच्छेदेनेत्यस्य तत्रैव तात्पर्यादित्यर्थ । तद्वदवच्छिन्नाधिकरणतान्यत्वस्य एवकारार्थत्वात् । अत्र केचित् । हेतुपद हेतुतावच्छेदकावच्छिन्नपरमिति । अन्यथा द्रव्य विशिष्टसत्त्वादित्यादावव्याप्ते । तत्र सत्ताया गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिसिद्धाया सत्तानिष्ठद्रव्यत्वसामानाधिकरण्याभावाधिकरणताया स्वानुयोगिसत्तानिरूपितसमवायसम्बन्धावच्छिन्नाधिकरणतावच्छिन्नावच्छेदकताकत्वेन तदभावविरहात्मकपदेन तदुपादानासम्भवात् । तादृशत्वान्यत्वनात्, हेत्वधिकरणावच्छिन्नत्वाच्च । हेतुतावच्छेदकावच्छिन्नत्वोक्तौ च तस्यास्तादृशहेत्वधिकरणीभूतद्रव्यानवच्छेद्यत्वेन तथाविधाधिकरणताया द्रव्यत्वनिष्ठाया एव गृहीतु शक्यत्वेपि तस्य स्वानुयोग्यधिकरणानवच्छिन्नत्वेन तद्भिन्नाया घटाभावादिनिष्ठाया तथाविधाभावाधिकरणताया आश्रयप्रतियोगिभावादिभिन्नस्य विशिष्टसत्ताया सत्त्वेन लक्षणगमनसम्भवात् । तथाच स्वानुयोगिनिष्ठहेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावच्छिन्नहेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यत्वावच्छिन्नभिन्ना या याधिकरणता तद्भेदकूटवति या हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नाधेयतानिरूपिताधिकरणतावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतानिरूपितसाध्यतद्वृत्तित्वाभावाधिकरणता तद्वत्त्वमिति समुदायार्थ । नच दीधितिमुक्तहेत्वधिकरणावच्छिन्नत्वं व्यर्थमिति वाच्यम् । स्वानुयोग्यधिकरणानवच्छिन्नत्वभिन्नानामनन्तानां तत्तदादिनिष्ठाधिकरणतानां व्यावृत्तये तदुपादानात् । द्रव्य विशिष्टसत्त्वादित्यादौ विशिष्टसत्ताया शुद्धसत्तानतिरेकितया सत्तानिष्ठगाव्यवृत्तित्वाभावाधिकरणताया स्वानुयोगिसत्ताधिकरणगुणावच्छेद्यतया स्वपदेन दुर्धरत्वात् । तादृशत्वान्यत्वात् । अत महतटेतुपटितनदुपादानमित्याहु । तदसत् । विशिष्टानतिरिक्तस्य विशेषणविशेष्यसम्बन्धस्य व्याप्यत्वमितिकल्पपक्षेपि विशिष्टसत्तादिव्याप्यसत्त्वाधिकरणविशिष्टस्यैव वैयर्थ्यात् हेतुपदमिति मद्भाषमतेर्दुर्वारत्वात् । विशिष्टस्यातिरिक्तत्वादिनिर्णये विशिष्टपद विशिष्टाधिकरणतापरमिति चेदस्तु कल्पितया । तथापि विशिष्टातिरिक्तादस्यैव मतुदारागमभिमतत्वादृशो

च्छिन्नपरमेव । हेतुतावच्छेदकसम्बन्धेन स्वानुयोगिनो यदधिकरण त-

कृष्णभट्टीय ।

प । अन्यथा तत्तत्साध्यत्वभिन्नदूषणासङ्गत्यापत्ते । गगननिष्ठसाध्यसामानाधिकरण्याभाववत्तया हेत्वधिकरणानवच्छिन्नत्वात् । भवन्मते द्रव्य विशिष्टसत्त्वादित्यादेरसम्भवाय तदावश्यकत्वात् । तदनुपादाय दूषणाभिधानासङ्गते । स्वानुयोग्यधिकरणानवच्छिन्न यस्य परिचायकत्वादनुगतेन तत्तद्भेदकूटविशिष्टसाध्यसामानाधिकरण्याभावाधिकरणत्वेनैवानन्तर्यवाद्यधिकरणताना निवेश्यतया, विशिष्यानिवेश्यतया तद्व्यावृत्त्यनावश्यकत्व चेति । परेतु । स्वानुयोगिनो हेतुतावच्छेदकावच्छिन्नस्य यदधिकरणमिति रीत्या स्वानुयोगित्वविशेष्यतया हेतुतावच्छेदकावच्छिन्ननिवेशार्थमाह—**हेतुपदमिति** । विशिष्टानतिरिक्ततापक्षे द्रव्य विशिष्टसत्त्वादित्यादिसम्भवाय स्वावयवावच्छेदेनैवात्मादिवृत्तिसाध्यवद्वृत्तित्वाभावाधिकरणतानामनन्ताना व्यावृत्तये च तथा तन्निवेश । तथासति जन्यगुणावच्छेदेन विशिष्टसत्ताया साध्यवद्वृत्तित्वाभावसत्त्वाल्लक्षणसमन्वय । हेत्वधिकरणावच्छेदेनैवेत्येवकारपूरणात् प्रकृत हेतौ स्वानुयोगित्वविशेषणदानाच्च तादृशार्थलाभ । पर्वतरूपादाविति पङ्क्ति स्वरसोऽप्यत्रैव । इद वाच्य ज्ञेयत्वादित्यादौ हेतौ स्वरूपसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावाप्रसिद्धि । आकाशावच्छेदेन कालिकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावसत्त्वेऽपि तदधिकरणता स्वानुयोगिज्ञेयत्वाधिकरणावच्छेद्यैवेति आकाशाभावाद्यधिकरणतैव तादृशी निरवच्छिन्नत्वादिति लक्षणसङ्गतिरित्याहु ॥ स्वानुयोगिन इति स्वपदमन्यप्रतियोग्यधिकरणतापर । वह्निमान् धूमादित्यादौ च स्व धूमादिनिष्ठसाध्यसामानाधिकरण्याभावाधिकरणता तदनुयोगिनो धूमादे संयोगेनाधिकरण पर्वतादि, तदवच्छेद्या स्वावयवावच्छेद्या सैव । तद्देशकूटवति च रूपादिनिष्ठसाध्यसामानाधिकरण्याभावाधिकरणतैव । एव सत्तावान् द्रव्यत्वादित्यादौ च जन्यगुणावच्छेदेन द्रव्यत्वे या साध्यसामानाधिकरण्याभावाधिकरणता सैव स्वानुयोगिद्रव्यत्वाधिकरणानवच्छेद्या तद्भिन्ना चाभावादिनिष्ठसाध्यसामानाधिकरण्याभावाधिकरणतैव । एव इद वाच्य ज्ञेयत्वादित्यादौ घटावच्छेदेन घटत्वप्रकारकप्रमाविशेष्यत्वे साध्यत्वनिरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वमन्येऽपि घटाद्यवच्छेदेन तद

न्यायरत्न ।

मतमाह—**यत्त्विति । हेतुतावच्छेदकसम्बन्धेन स्वानुयोगिनो यदधिकरणमिति** । स्वपदमधिकरणतासामान्यपर तथाच हेतुतावच्छेदकसम्बन्धेन स्वानुयोगिनो यदधिकरण तदनवच्छिन्ना या या स्वाभिन्नाधिकरणता तत्तदन्यसाध्यसामानाधिकरण्याभावाधिकरणतावद्भिन्नत्वमित्यर्थस्तेन धूमवान्वह्नेरित्यादौ स्वपदमाद्यघटादिनिष्ठाधिकरणताश्रयानुयोग्यनवच्छिन्नाधिकरणतासामान्यभेदस्य तस्मिन् सत्त्वेऽपि नातिव्याप्ति । अयोगोलकाले धूमे न वह्निमत्त्वयुक्तत्वमिति

दनवच्छिन्ना या या अधिकरणता तत्तदन्यत्वेन साध्यसामानाधिक-

कृष्णभट्टीय ।

मानवत्त्व वा द्रव्यं सत्त्वादित्यादावव्याप्तिप्रसक्तिरित्याहु ॥ वस्तुतस्तु । हेतुताव च्छेदकसम्बन्धावच्छिन्नस्वानुयोग्यधिकरणतावदनवच्छेद्यत्वं सम्यक् । द्रव्यं स- त्त्वादित्यादौ स्वानुयोगिसत्ताधिकरणतावदनवच्छेद्यत्वं न स्वस्येत्यनतिप्रसङ्गात् । अत्र स्वानुयोगिनो यद्यदधिकरणमिति निवेशपक्षे कालिकसम्बन्धेन धूमानुयो गिध्वंसादेर्यद्यदर्थान्तर्गततया तन्निष्ठहेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदक- त्वाप्रसिद्धिः । वस्तुतस्तुकल्पे च, सम्बन्धान्तरेण वर्तमाननिष्ठाधिकरणताया अपि स्वानुयोग्यधिकरणानवच्छिन्नत्वमेव । गगनादेरपि विषयतासम्बन्धेनाधि करणसम्भवात् । एवं वह्निमान् संयोगेन रूपादित्यादावतिव्याप्तिः । स्वानु योग्यधिकरणनिष्ठहेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकान्यत्वस्य हेतुनिष्ठा धिकरणताया सत्त्वात् । अत स्वानुयोग्यधिकरणताया हेतुतावच्छेदकसम्बन्धा वच्छिन्नत्वनिवेश । धूमान्तरसंयुक्तत्वादिरीत्या व्याप्तिवारणं तु न तत्परम् । हेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकतानिवेशसत्त्वेनाव्यावर्त्यत्वात् । धू- मान्तरसंयुक्तत्वावयवावच्छिन्नधूमनिष्ठतादृशाधिकरणतायां धूमान्तरनिष्ठता दृशाधिकरणताभेदस्य त्वदुक्तदोषनादस्यमिति ये थ इति धीरा । स्वावच्छि न्नानुयोग्यधिकरणावच्छेद्यतानवच्छेदकाधिकरणत्वावच्छिन्नैकभेदस्तु नोक्त । रूपधूमवायवादिवृत्त्यधिकरणतासाधारणसाध्यवद्वृत्तित्वाभावाधिकरणता

न्यायरत्न ।

र्यमिति चेन्न । तथासति हेतुतावच्छेदकसम्बन्धावच्छिन्नातीतानागतदेशान्तरी यकालान्तरीयावच्छेदकतानामपि लक्षणे निवेशापत्त्या गौरवात् । किञ्च सत्ता वान् द्रव्यत्वादित्यादावव्याप्ति, तन्नासमवेतवृत्त्यधिकरणताया हेतुतावच्छेदकसम्ब- न्धावच्छिन्नावच्छेदकताकान्यत्वासमवेते च साध्यसामानाधिकरण्याभावाधिकर- णताया असत्त्वेन हेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकताकान्याधिकरणतान्य- तादृशाधिकरणताया अप्रसिद्धे । नचोत्पत्तिक्षणविशिष्टे द्रव्ये गुणे न सत्तावत्समवे- तत्वमिति प्रतीत्योत्पत्तिक्षणविशिष्टद्रव्यावच्छेदेन सत्तावत्समवेतत्वाभावाधिकरण- ताया गुणादौ प्रसिद्ध्या तस्या एव हेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकताका- न्याधिकरणतान्यसाध्यसामानाधिकरण्याभावाधिकरणतात्वात्तद्भिन्नत्वस्य हेतौ सत्त्वाल्लक्षणसमन्वय सम्भवतीति वाच्यम् । स्वानुयोग्यधिकरणांशानिवेशेऽप्युत्पत्ति क्षणविशिष्टपर्वते धूमे न वह्निमत्संयुक्तत्वमिति प्रतीतिसिद्धसाध्यसामानाधिकर- ण्याभावाधिकरणाभावाधिकरणतामादायाव्याप्तेर्वारणाय तादृशप्रतीतेरुत्पत्तिक्ष णविशिष्टपर्वतावच्छेदेनत्वाभावविषयकत्वस्यानुपगमनात्तत्समशीलोत्पत्तिक्षणविशि ष्टद्रव्ये इत्याद्याकारकदर्शितप्रतीतेरुत्पत्तिक्षणविशिष्टद्रव्यावच्छेदेनत्वाभावविषयक- तया तादृशाधिकरणतान्यसाध्यसामानाधिकरण्याभावाधिकरणताया सत्तावा- न्द्रव्यत्वादित्यादावप्रसिद्धेरिति हेतुतावच्छेदकसम्बन्धेन स्वानुयोग्यधिकरणांशनि-

रण्याभावाधिकरणतायाः विशेषणीयत्वान्नोक्तदोषः । नवाऽननुगमः । एवंच कालोपाधिविधया हेत्वधिकरणस्य देशस्यावच्छेदकत्वेन उक्तदोषस्य अनवच्छिन्नप्रतियोगिकोटौ हेतुतावच्छेदकसंबन्धावच्छिन्ना-

कृष्णंभट्टीयं ।

त्वस्य स्वपदेनोपादानेऽपि तस्यातिप्रसक्तत्वेन तादृशावच्छेद्यतानवच्छेदकतया तदवच्छिन्नभिन्नसाध्यवद्वृत्तित्वाभावाधिकरणताया अप्रसिद्धेः । संबन्धान्तरेणावर्तमानवृत्त्यधिकरणताव्यावृत्तस्य स्वावयवाग्र.पिण्डरूपवद्भेदकभिन्नाधिकरणताद्वयमात्रवृत्त्यधिकरणताविशेषत्वादेः स्वपदार्थत्वे तस्यातिप्रसक्ततया तादृशावच्छेद्यतानवच्छेदकतया तदवच्छिन्नभिन्नाया संबन्धान्तरेण वर्तमानवृत्त्यधिकरणताया एव प्रसिद्धेरतिव्याप्ते । तत्तदधिकरणतानुयोग्यधिकरणानवच्छेद्यत्वकूटविशिष्टाधिकरणतात्वानवच्छिन्नभेदस्तु नोक्तः । येयेत्यन्तस्य परिचायकतया ततोऽपि यथोक्तकल्पे लाघवात् । स्वाधिकरणावच्छेद्यसाध्यसामानाधिकरण्याभावाधिकरणतावद्भिन्नत्वनिवेशोऽननुगमात् स्वानुयोगीत्यादिरीत्या निवेश इत्याह—नवेति । इदानीं धूमे न वह्निमत्संयुक्तत्वमिति प्रतीतिसिद्धतदधिकरणताभावाय प्रसंजितदोषं देशविधया विलक्षणावच्छेदकत्वानिवेशेऽप्युद्धरति । एवंचेति । यद्यप्येवं सति स्वानुयोगित्वं व्यर्थम् । धूमान्तरसंयुक्तस्वावयववह्निसाध्यसामानाधिकरण्याभावावच्छेदकताया हेतुतावच्छेदकसंबन्धावच्छिन्नत्वात्तत्राव्याप्त्यभावात् । तथापि प्रसिद्धानुमाने हेतुनिष्ठाना संबन्धान्तरेण वर्तमाननिष्ठानां अवृत्तिनिष्ठाना च साध्यवद्वृत्तित्वाभावाधिकरणतानां हेतुतावच्छेदकसंबन्धावच्छिन्नावच्छेदकत्वानिरूपकतया तन्निरूपितादृशाधिकरणतानामप्रसिद्धिरतस्तन्निवेश । ननु लाघवात् स्वानुयोगिनो हेतोर्वा यदधिकरणं तन्निष्ठहेतुतावच्छेदकसंबन्धावच्छिन्नावच्छेदकताकत्वमेव निवेश्यम् । एवंच हेतुतावच्छेदकसंबन्धेनाधिकरणं तत्रद्वयं च

न्यायरत्नं ।

वेशः । तत्रैव स्वानुयोगित्वविशेषतया हेतुतावच्छेदकावच्छिन्नस्य निवेशाय हेतुपद हेतुतावच्छेदकावच्छिन्नपरमित्युक्तम् । अन्यथा द्रव्यं विशिष्टसत्वादित्यादावव्याप्त्यापत्तेः सत्तानिष्ठद्रव्यत्वसामानाधिकरण्याभावाधिकरणताया स्वानुयोग्यधिकरणगुणावनवच्छेद्यत्वविरहेण स्वपदेनोपादानासंभवात् । **उक्तदोषस्येति ।** उत्पत्तिकाले धूमे न वह्निमत्संयुक्तत्वमिति प्रतीतिसिद्धधूमनिष्ठसाध्यसामानाधिकरण्याभावाधिकरणतामादायाव्याप्तेरित्यर्थः । **हेतुतावच्छेदकसंबन्धावच्छिन्नावच्छेदकत्वनिवेशेनापीति ।** अपिना विलक्षणदेशविधयाऽवच्छेदकत्वनिवेशेनाप्युक्तदोषवारणं कर्तव्यमिति सूचितम् । अत्रेदं बोध्यम् । स्वानुयोग्यधिकरणनिष्ठावच्छेदकताया हेतुतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशे हेतुतावच्छेदकसंबन्धेन स्वानुयोग्यधिकरणत्वनिवेशो व्यर्थ । स्वावयवावच्छिन्नताया साध्यसामा-

वच्छेदकत्वनिवेशेनापि वारणसंभवः । पर्वतरूपादौ हेतुतावच्छेदकसंबन्धावच्छिन्नपर्वतादिनिष्ठावच्छेदकताकसाध्यसामानाधिकरण्याभाववत्त्वाप्रसिद्धावपि रूपादिनिष्ठतादृशावच्छेदकतायां[१] धूमादिप्रसिद्धे-

कृष्णभट्टीय ।

र्व्यर्थमिलाशङ्काह—पर्वतरूपादाविति । अप्रसिद्धाविति । नच संबन्धान्तरेण वर्तमाननिष्ठसाध्याधिकरणतानिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नावच्छेदकत्वाप्रसिद्धावपि साध्याधिकरणतदनधिकरणमात्रवृत्तिदीर्घदण्डादौ साध्यानधिकरणावच्छेदेन साध्यसामानाधिकरण्यप्रसिद्धेर्लक्षणसंगतिसंभवः । प्रयोजनाभावेन निष्ठान्तमनुपादाय हेतुतावच्छेदकसंबन्धावच्छिन्नावच्छेदकताकत्वमात्रोपादानादिति वाच्यम् । एवमपि जातिमान्सत्त्वादित्यादौ तदप्रसिद्धेर्दुर्वारत्वात् । लक्षणगमनादिति । नचैवमसंभवः संबन्धान्तरेण वर्तमाननिष्ठयत्किंचिदधिकरणतीयहेतुतावच्छेदकसंबन्धावच्छिन्नावच्छेदकत्वाप्रसिद्धेरिति वाच्यम् । प्रसिद्धानुमानादौ साध्याधिकरणतदनधिकरणसाधारणदीर्घदण्डादौ पर्वतावच्छेदेन शैवालादिमद्वृत्तित्वाभाववत्त्वादौ तादृशसंबन्धावच्छिन्नावच्छेदकतायास्तु प्रसिद्धेः । जातिमान् सत्त्वादित्यादौ च्चं[?]मावच्छिन्नसाध्यवद्वृत्तित्वाभावानुयोगिसत्ताधिकरणघटावच्छेदेन द्रव्यत्वे द्वित्वादौ वा न समवायावच्छिन्नावच्छेदकताका घटवृत्तित्वाभाववत्ता गुणरूपवत्त्वादित्यादौ तन्नीलावच्छेदेन नीलत्वादौ क्रियावृत्तित्वाभावरूपत्वादौ रसरूपादिवृत्तित्वाभाववत्ता चेत्यादिरीत्याऽवगन्तव्यम् ॥

न्यायरत्न ।

नाधिकरण्याभावाधिकरणताया हेतुतावच्छेदकसंबन्धावच्छिन्नावच्छेदकताश्रयत्वेन स्वानुयोग्यधिकरणानवच्छिन्नत्वानुपादानेन तादृशं यत्त्वं तदन्यत्वविरहेण तामादायाव्याप्त्यनवकाशात् । नचैवं रूपनिष्ठसाध्यसामानाधिकरण्याभावाधिकरणताया अपि स्वानुयोग्यधिकरणनिष्ठहेतुतावच्छेदकसंबन्धावच्छिन्नावच्छेदकताश्रयत्वेन तादृशं यत्त्वं तदन्यसाध्यसामानाधिकरण्याभावाधिकरणताया अप्रसिद्धिरिति वाच्यम् । साध्यशून्ये हेतुतावच्छेदकसंबन्धेन यो वृत्तिमांस्तन्निष्ठसाध्यसामानाधिकरण्याभावाधिकरणताया: स्वानुयोग्यधिकरणनिष्ठहेतुतावच्छेदकसंबन्धावच्छिन्नावच्छेदकताश्रयत्वेन स्वपदेनोपादानासंभवात्तस्या एव तादृश यत्त्व तदन्यसाध्यसामानाधिकरण्याभावाधिकरणतात्वसामान्यैव सर्वत्र लक्षणसमन्वयसंभवात् । यत्तु स्वानुयोगिनो यदधिकरणमित्यत्र यद्यदधिकरणमिति वक्तव्यमन्यथा द्रव्य सत्त्वादित्यादौ सत्तानिष्ठद्रव्यत्वसामानाधिकरण्याभावाधिकरणताया स्वानुयोग्यधिकरणं यद्द्रव्यं तदनवच्छिन्नत्वेन तदन्य-

१ निरुक्ताधिकरणताया नै. पा. २ वह्निमदनुयोगिकत्वाति दा. पा.

योगेन वह्निमतिच समवायेनावृत्तावपि न क्षतिः ।

---

निरुक्ताधिकरणताभिन्नत्वस्य साध्यक्षततया तद्वदन्यत्वेन धूमादौ लक्षणसमन्वयसम्भवादिति । तन्न साधु । तथासति किंचेत्याद्यग्रिमग्रन्थासङ्गतेः । गगननिष्ठसाध्यसामानाधिकरण्याभावाधिकरणताया एवोक्ताधिकरणताभिन्नाया प्रसिद्धेः । वह्निमति चेति । तथाच तेनैव सम्बन्धेनेत्यनुक्त्वा यत्किंचित्सम्बन्धेनेत्युक्तौ पर्वतत्वावच्छिन्नवह्निमत्संयुक्तत्वस्यापि तदवच्छिन्नवह्निमत्समवेतत्वाभावसत्वाद्धूमस्य वह्निव्याप्यत्वं नोपपद्यत इति भावः । साध्यवत्सम्बन्धित्वसामान्याभावनिवेशे वह्निमत्समवेतत्वसामान्याभावस्य लक्षणघटकत्वेपि वह्निमत्सम्बन्धित्वस्य हेत्वधिकरणविशेषावच्छिन्नसाध्यवत्सम्बन्धित्वसामान्याभावस्याप्रसिद्ध्या असम्भवो बोध्य । साध्यवत्सम्बन्धस्य हेतुमति सम्बन्धासम्भवादवच्छेद्याधिकरणसन्निधान एवावच्छेदकतया तन्निष्ठाभावे हेतु

कृष्णभट्टीय ।

गगननिष्ठेति । अभावावच्छेदेन साध्यवन्निरूपितकालिकसम्बन्धावच्छिन्नवृत्तित्वाभाववत्तादृशाभावाधिकरणता स्वपदेन ग्राह्या । स्वरूपसम्बन्धेन गगनादेरपि वृत्तिमत्वपक्षावलम्बनात्तत्र न साध्यसामानाधिकरण्याभाव इति तु न वाच्यम् । तथासति हेत्वधिकरणावच्छेदेनेत्यस्यासङ्गतेः । अत्र विषयतासम्बन्धेन साध्यताया हेतुताया च ग्रन्थे पदावच्छेदेन साध्यवन्निरूपितविषयतासम्बन्धावच्छिन्नवृत्तित्वाभावसत्वात् स्वपदेन तदधिकरणतोपादेयेति गगने साध्यवद्वृत्तित्वस्यैव सत्वात् तन्निष्ठसाध्यवद्वृत्तित्वाभावाधिकरणताया अप्रसिद्धिरित्यव्याप्तिरपि बोध्या । तदवच्छिन्नेति । यद्यपीदानीमेतद्विशेषो नास्ति वैयर्थ्यात् । तथापि तदवच्छिन्नवह्निमत्समवेतत्वाभावो वर्तते ननु तदवच्छिन्नवह्निमत्संयुक्तत्वाभाव इत्यर्थावेदनाय तदुत्कीर्तनम् । घटान्यन्ताभावत्वव्यक्तित्वादित्यादौ संयोगादिसम्बन्धावच्छिन्नमिव विषयताप्रतियोगित्वपोर्वृत्यनियामकतया तत्सम्बन्धावच्छिन्न च घटाभाववृत्तित्वमप्रसिद्धमिति स्व

न्यायरत्न ।

त्वाभावादित्याभ तथाच हेतुतावच्छेदकसम्बन्धेन स्वानुयोग्यधिकरणत्वानिवेशे वह्निमान् धूमादित्यादौ कालिकसम्बन्धेन स्वानुयोग्यधिकरणध्वसादिनिष्ठहेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकताया अप्रसिद्धेः धूमाद्यवच्छिन्नसाध्यसामानाधिकरण्याभावाधिकरणताया स्वपदेनोपादानासम्भवेन तादृश यत्त्त्र तद

मतोऽनवच्छेदकत्वात्। नक्षतिरिति। नाव्याप्तिः। नासम्भवश्चेत्यर्थः। साध्यवत्ता च साध्यतावच्छेदकसम्बन्धेन बोद्धव्या। तेन समवायेन वह्नौ साध्ये संयोगेन हेतौ धूमे पर्वताद्यवच्छिन्नवह्निमद्वृत्तित्वसामान्याभावासत्त्वेऽपि नातिव्याप्तिः। तथा सद्धेतावपि यत्किंचित्सम्बन्धेन यः साध्यवान् तद्वृत्तित्वाभावस्य स्वाधिकरणावच्छेदेन सत्त्वेऽपि न दोषः। साध्यवत्त्वं चोपलक्षणविधया अभावप्रतियोगितावच्छेदककोटौ निवेशनीयम्। ननु विशेषणविधया तेनोत्पत्तिक्षणावच्छिन्नघटादौ गन्धाद्यसत्त्वात्तादृशघटाद्यवच्छेदेन पृथिवीत्वादौ गन्धादिविशिष्टवृत्तित्वाभावसत्त्वेऽपि गन्धवान् पृथिवीत्वादित्यादौ मूलावच्छिन्नवृक्षादौ कपिसंयोगाभावसत्त्वात्तादृशवृक्षाद्यव-

कृष्णभट्टीय।

रूपसम्बन्धावच्छिन्नवृत्तित्वाभावमादाय लक्षणगमनादुक्तं धूमस्येति, अग्रे नाव्याप्तिरितिच। असम्भवप्रकारस्य पूरितत्वादाह—नासंभवश्चेति। तेनेति। संबन्धसामान्येन साध्यवत्तानिवेशे अत्र पूर्वोक्तन्यायेन वह्न्यवयवे धूमान्तरमवात्साध्यतावच्छेदकसमवायसंबन्धेन साध्यवन्निरूपितसंयोगसम्बन्धावच्छिन्नवृत्तित्वाभावस्य धूमान्तरे असत्त्वेऽपि वह्न्यवयवेन वह्निसंयोगस्तत्र तादृशाभावस्य पर्वतावच्छेदेन सौलभ्यम्। अन्यथा व्यभिचारित्वानुपपत्तेरिति बोध्यम्। साध्यवत्त्वं चेति। साध्यवत्तासमानाधिकरणाधिकरणताकत्वस्वरूपावच्छिन्नाभावनिवेशाय साध्यनिष्ठवृत्तित्वाभावस्य लक्षणघटकेत्यर्थः। अवच्छेदकतापर्याप्त्युपादानाय साध्यविशिष्टवृत्तित्वाभावव्युदासः। तत्प्रतियोगितावच्छेदकताया

न्यायरत्न।

न्यत्वेनाव्याप्तिप्रसङ्ग इति तन्निवेश इति। तन्न। स्वानुयोग्यधिकरणत्वावच्छिन्नहेतुतावच्छेदकसम्बन्धावच्छिन्नावच्छेदकतात्वसामान्याभावरूपस्वानुयोग्यधिकरणानवच्छिन्नत्वनिवेशेन द्रव्यं सत्त्वादित्यादावतिव्याप्तिवारणसम्भवादिति निवेशनावश्यकत्वात्। यदपि हेतुतावच्छेदकसम्बन्धेनेति तृतीयान्तं स्वानुयोग्यधिकरणादौ। नान्वेति किन्तु स्वानुयोग्यधिकरणानवच्छिन्नत्वप्रावच्छेदकतायामेवेति न तद्वैयर्थ्यमिति तदपि न। तथा सति "रूपादिनिष्ठनिरुक्ताधिकरणताया धूमादिप्रसिद्धनिरुक्ताधिकरणतानां भेदस्याक्षततया तद्वदन्यत्वेन धूमादौ लक्षणसमन्वयादिति" ग्रन्थविरोधादिति। साध्यवत्त्वं चोपलक्षणविधयेति। तथा च "यद्रूपलक्षितनिरूपितसमवायादेरवच्छेदकताघटकसम्बन्धत्वं तद्रूपोपलक्षणतयाऽवच्छेदकत्वमिति" सिद्धान्तलक्षणे वक्ष्यमाणरीत्या साध्यस्योपलक्षणतयाऽवच्छेदकत्वविवक्षायां साध्योपलक्षिताधिकरणप्रतियोगिकनिरूपितत्वसम्बन्धा-

च्छेदेन एतद्वृक्षादौ कपिसंयोगादिविशिष्टवृत्तित्वाभावसत्त्वेपि कपिसंयोगी एतद्वृक्षत्वादित्यादौ वा नाव्याप्तिः । तत्तत्कालदेशावच्छिन्नतत्तदधिकरणावच्छेदेनापि तत्र तत्र हेतौ तादृशसाध्योपलक्षितत-

## कृष्णभट्टीय ।

देशकालाद्यवच्छेद्यत्वविशिष्टपर्याप्तत्वात् । सत्तावान् जातेरित्यादौ सत्तावत्समवेतत्वाभाव एव लक्षणघटक । उपलक्षणस्यापि प्रतियोगितावच्छेदककोटिप्रवेशात् । गुरुधर्मस्य प्रतियोगितावच्छेदकत्वाच्च । नच साध्याधिकरणातिरिक्तविशेषणाविशेषितवृत्तित्वाभाव एव निवेश्य । गुरुधर्मस्य प्रतियोगितावच्छेदकत्वेऽपि न समवेतत्वाभावमादायोपपत्तेरिति वाच्यम् । तथासति साध्यस्य व्याप्यघटकत्वापत्ते । साध्यविशिष्टवृत्तित्वाभावस्य लक्षणघटकत्वेऽपि अवच्छेदकताया निरवच्छिन्नत्वनिवेशाच्च गन्धवान् पृथिवीत्वादित्यादौ अव्याप्तिरिति प्रकाशिकाकृन्मतं निराकर्तुमाह—नत्विति । साध्याधिकरणतावैशिष्ट्यावच्छिन्नवृत्तित्वाभावनिवेशे निरवच्छिन्नविशेषणनिवेशे च गौरवादिति भाव । निरवच्छिन्नत्वानुक्तौ विशेषणतया साध्यवत्त्वनिवेशेऽव्याप्तिं प्रदर्श्योपलक्षणतया तन्निवेशाद्वारणमाह—तेनेत्यादिना । एवमपि । साध्यवत्त्वस्योपलक्षणत्वेपि । देश शिखरादि । कालो वह्निप्रागभावादि, तथाच धूमाधिकरणताया स्वभावतएव निरवच्छिन्नतया वह्निरूपकत्वाभावसत्त्वादव्याप्तिरत निरवच्छिन्नत्वमावश्यकमित्यभिसन्धि । विशिष्टधर्मिपर्याप्तावच्छेदकताया

## न्यायरत्न ।

वच्छिन्नसाध्याधिकरणनिष्ठावच्छेदकताकवृत्तित्वावच्छिन्नप्रतियोगिताकाभाव साध्यसामानाधिकरण्याभावपदेन विवक्षणीय । यद्वा स्वावच्छिन्ननिरूपकतावत्त्वसम्बन्धावच्छिन्नसाध्यनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठप्रतियोगिताकाभावत्वपदेन विवक्षणीय । साध्यविशिष्टाधिकरणवृत्तित्वाभावप्रतीतौ च साध्यस्याधिकरणांशे भासमानस्य धर्मिपारतन्त्र्येण वृत्तित्वरूपप्रतियोग्यंशे भाननियमात्तादृशप्रतीतिविषयाभाव स्यात्तथात्वात् तमादायोत्पत्तिकालीनघटो न घटवान् -पृथिवीत्वादित्यादावव्याप्ति । ननु गन्धानधिकरणोत्पत्तिकालविशिष्टपृथिव्या पृथिवीत्वेन गन्धवत्समवेतत्वमिति प्रतीतिर्यथोत्पत्तिकालविशिष्टपृथिव्यवच्छेदेन पृथिवीत्वे गन्धविशिष्टनिरूपितसमवेतत्वाभावमवगाहते तथा धूमनिष्ठवत्तानिरूपितावच्छेदकनिरूप्यधूमासमानकालादिविशिष्टपर्वते धूमे न वह्निमत्संयुक्तत्वमिति प्रतीतिरपि तादृशविशिष्टपर्वतावच्छेदेन वह्निमत्संयुक्तत्वाभावमवगाहत इति तद्विषयाभावमादायाव्याप्ति । यदिच विशेष्यस्य पर्वतादे प्रतियोग्यवच्छेदकतया विशिष्टस्य तस्य नाभावावच्छेदकत्वमिति तादृशाभावो धूमादावसिद्ध इत्युच्यते तदा शुद्धपृथिव्या अपि प्रतियोग्यवच्छेदकतया विशिष्टपृथिव्या अभावावच्छेदकत्वासम्भवेन तादृशाभावोऽपि पृथिवीत्वादावसिद्ध इत्यधिकरणांशे

त्तद्धर्मिवृत्तित्वसत्वात् । नचैवमपि धूमादौ पर्वतवृत्तेरनवच्छेदको यो देशः कालो वा तदवच्छिन्नपर्वतावच्छेदेन वह्न्यादिमद्वृत्तित्वाभावस्य धूमादौ सत्वादव्याप्तिर्दुर्वारैवेति वाच्यम् । तत्तद्देशकालावच्छिन्नपर्वतादेर्धूमाद्यसंबन्धितया धूमादावभाववृत्तावपि तादृशस्यानवच्छेदकत्वात् । नचैवमुत्पत्तिक्षणविशिष्टपर्वते न वह्निमत्संयुक्तत्व(मि-त्यादि)मिति प्रतीत्यनुपपत्तिः । द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्यमित्यादिवदुक्तप्रतीतेः सामानाधिकरण्यावच्छेदकत्वाभावावलम्बनता न संभवति विशेषस्यावच्छेदकत्वे विशिष्टस्यानवच्छेदकत्वासंभवादिति वाच्यम् । तादृशप्रतीतीनां सामानाधिकरण्ये विशिष्टपर्वताद्यवच्छेद्यत्वाभावावगाहितयैवोपपत्तेः । उत्पत्तिक्षणे पर्वते धूमस्य

कृष्णंभट्टीयं ।

विशिष्टधर्म्यनुयोगिकसंबन्धनियतत्वमित्याशयेन समाधत्ते । तत्तद्देशेति । नच देशकालान्तरावच्छेदेन धूमसंबन्धित्वं तत्कालावच्छेदेन संबन्धस्यैव तत्कालावच्छिन्नावच्छेदकतानियामकत्वात् । तथाच धूमनिष्ठाभावस्य हेत्वधिकरणावच्छिन्नत्वं नास्तीति भावः । नचैवमपि शिखराद्यवच्छिन्नपर्वतस्य कालिकसंबन्धेन साध्यवद्वृत्तित्वाभावानुयोगिधूमवत्त्वात्कथं नावच्छेदकत्वमिति वाच्यम् । तदवच्छेदकताया देशविधया तद्भिन्नत्वात् तदवच्छिन्नतत्संबन्धावच्छिन्नतदधिकरणताया एव तन्निष्ठधर्मनिरूपिततदवच्छिन्नतत्संबन्धावच्छिन्नावच्छेदकतानियामकत्वमित्यवच्छिन्नावच्छेदकतास्थलीयनियमः । एतेन रूपवान् रसादित्यादावव्याप्तिवारणायैव निरवच्छिन्नत्वमित्यपास्तम् । यत्कालावच्छेदेनावच्छेद्याधिकरणसंबन्धता तत्कालावच्छेदेन हेतौ साध्यव-

न्यायरत्नं ।

साध्यस्योपलक्षणतयावच्छेदकत्वनिवेशो निरर्थक इत्यभिप्रायेण शङ्कते—नचैवमपि धूमादाविति । एवं विशेष्यस्य प्रतियोग्यवच्छेदकत्वेऽपि किंचिद्रूपेणाभावावच्छेदकत्वे । अनवच्छेदकत्वादिति । अवच्छेदकघटकीभूतविशेषणविशेष्ययोरवच्छेदकतया भाने तयोरवच्छेद्याधिकरणाधिकरणत्व नियामकमन्यथा उत्पत्तिविशिष्टपर्वते धूमे न वह्निमत्संयुक्तत्वमिति प्रतीत्यापत्ते । एवं च धूमवृत्तितानवच्छेदकदेशकालयोरवच्छेद्याधिकरणधूमानधिकरणत्वाद्धूमादौ तादृशाभावाप्रसिद्ध्या न तमादायाव्याप्तिरुत्पत्तिक्षणपृथिव्यां पृथिवीत्वस्य नियततयाऽवच्छेद्याधिकरणतदधिकरणत्वसमवेनोत्पत्तिक्षणविशिष्टपृथिव्यां पृथिवीत्वेन गन्धविशिष्टममवेतत्वमिति प्रतीतिसंभवादधिकरणांशे साध्यस्योपलक्षणतयाऽवच्छेदकविक्षणं सार्थकमिति भाव । न चैवमिति । एवं विशिष्टस्यावच्छेदकत्वे विशेषण-

मात्रावच्छिन्नत्वनिवेशनं येषाचिदनुपादेयमेव । तथासति वह्न्यादि-

कृष्णंभट्टीयं ।

स्यात् । संयोगेन व्यभिचारिणि धूमवान् वह्नेरित्यत्रैव । ननु कालिकसंब-न्धेन व्यभिचारिण्यपि । तथावच्छेदकताया कालिकसंबन्धावच्छिन्नत्वहेतु-तावच्छेदकसंबन्धावच्छिन्नत्वोभयाभावनिवेशो बोध्य । एवंच वह्निमान् धूमादित्यादौ कालिकेन हेतौ परमाणोर्व्यणुकधूमनिष्ठसाध्यसामानाधिकर-ण्याभावीयसमवायसंबन्धावच्छिन्नावच्छेदकतावत्त्व कालिकसंबन्धेन हेतुशू-न्यत्वेऽपि न क्षति. । संयोगेन व्यभिचारिसमत्वात् । यदिचैवंसति उत्पत्ति क्षणपर्वतयो धूमनिष्ठसाध्यसामानाधिकरण्याभावावच्छेदकत्वे पर्वतनिष्ठाव-च्छेदकताया एतादृशविशेषणवत्तया हेत्वधिकरणताव्याप्यत्वेन चाव्याप्तिता-दवस्थ्यान्मात्रपदं व्यर्थं । तदापि प्रतियोग्यवच्छेदके पर्वते तदभावावच्छेद कत्वं न स्यात् । पर्वते तत्काले धूमस्य संयोगासत्त्वात् । अत. कालिकसबन्ध एवावच्छेदकतानियामको वाच्य. । तथाच पर्वतनिष्ठावच्छेदकताया नोभ-याभाववत्त्वमिति नाव्याप्ति । यदिच पूर्वमुत्पत्तिक्षणविधया पर्वतस्यावच्छेद-कत्वाभिधानादिदानीं सिद्धान्ते च तदनङ्गीकारे विरोध तदा पर्वतधूमयो संयोग एवावच्छेदकतानियामकः सिद्धान्ते प्रतियोग्यवच्छेदकतया अभावा-वच्छेदकता नास्ति एतन्मते कालनिष्ठावच्छेदकतासाम्येन नास्तीति विरोध इति मन्यते । तदा कालिकसंबन्धावच्छिन्नत्वहेतुतावच्छेदकसंबन्धाव-च्छिन्नत्वोत्पत्तिक्षणत्वावच्छिन्नत्वेतत्रितयाभाव एवावच्छेदकताया निवेश्य । तथासति पर्वतनिष्ठावच्छेदकतायां कालिकसंबन्धावच्छिन्नत्वेन उत्पत्तिक्षण-निष्ठावच्छेदकताया उत्पत्तिक्षणत्वावच्छिन्नत्वेन त्रितयाभावसत्त्वेऽपि हेतुशू-न्योत्पत्तिक्षणसत्त्वेन हेत्वधिकरणत्वस्य तदव्यापकत्वादव्याप्ति । उभयाभाव-त्रितयाभावविशेषितवह्निशेषितकल्पयोर्दोषमाह—तथासतीति । यदिच

न्यायरत्नं ।

सिद्धे. । अत एव हेत्वधिकरणनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वसाद्धि-तहेत्वधिकरणनिष्ठावच्छेदकतानिरूपकत्व तदित्यपि न । सर्वस्या अप्यवच्छेदक-तया हेत्वधिकरणनिष्ठत्वात्तदन्यावच्छेदकतायाश्चाप्रसिद्धत्वात् । नच हेत्व-धिकरणनिष्ठा देशविधया याऽवच्छेदकता तदन्यावच्छेदकतानिरूपकत्वादिरेव तदिति नोक्तस्थलेऽव्याप्तिरिति वाच्यम् । एवं सति तथा सतीत्यादिना वक्ष्यमा-णातिव्याप्त्यसंभव । रूपादिनिष्ठाधिकरणतायामप्ययोगोलके रूपेण धूमवत्त्वयुक्त-त्वमिदानीं रूपेण धूमवत्त्वयुक्तत्वमिति प्रतीतिभ्यामयोगोलकोत्पत्तिकालोभयाव-च्छिन्नत्वावगाहनात्तादृशाधिकरणताया अप्रसिद्धे । एतेन स्वावच्छेदकताव्या-पकहेत्वधिकरणताकत्वमेव तदिति निरस्तम् । यदि च गगनादिनिष्ठाधिकरणतैव तादृशीत्युच्यते तदा वह्निमान्धूमादित्यादावपि तस्या एव प्रसिद्धत्वात्तत्रैव सम-न्धान्तरेण वर्तमान इति ग्रन्थविरोध इति चेन्न । तादृशग्रन्थस्य यथाश्रुताभिप्रा-

तादृशाभावश्च तत्रैव संबन्धान्तरेण वर्तमाने सुलभः ।

---

निष्ठधूमसामानाधिकरण्याभावस्यापि अयोगोलकस्यावयवोभयावच्छिन्नतया हेतुतावच्छेदकसंबन्धेन हेतुमन्मात्रानवच्छेद्यतयाऽतिव्याप्तिप्रसङ्गाच्च । केचित्तु । विशिष्टपर्वतादेरवच्छेदकतामादायाव्याप्तेर्वारणायावच्छेदकान्तरानवच्छिन्नहेत्वधिकरणावच्छिन्नत्वमभावे निवेशनीयम् । एवंच पर्वतादेः कालविधया धूमनिष्ठवह्निमत्संयुक्तत्वाभावावच्छेदकत्वस्यापि व्यावृत्तिः । पर्वतादेः स्थूलकालतया वह्निमत्संयुक्तत्वादिरूपप्रतियोगिनोऽपि अवच्छेदकत्वात्तन्निष्ठाभावावच्छेदकतया अविरोधाय अवान्तरकालावच्छिन्नत्वोपगमादित्यप्याहुः ॥ हेतुमत्संबद्धे साध्यासामानाधिकरण्याभावस्योक्तयुक्त्या हेत्वधिकरणावच्छिन्नत्वविरहात् । हेतुतावच्छेदकसंबन्धेन हेतुमत्संबद्धे हेतुमदवच्छिन्नतादृशाभावप्रसिद्धिमाह—तादृशेति । हेतुतावच्छेदकसंबन्धेन साध्यवद्वृत्तित्वस्य तेन संबन्धेन हेतुमदवच्छिन्नाभावश्चेत्यर्थः । तत्रैव—तादृशहेतुमत्येव । नच तथाविधरूपादौ वह्निमत्संयुक्तत्वाभा-

कृष्णंभट्टीयं ।

स्यावच्छेदकताव्यापकहेत्वधिकरणताकसाध्यवद्वृत्तित्वाभावाधिकरणतया त- त्प्रवेशादृदग्नन्वं निष्कर्षः । तदा नच दोषः । स्यावयवायोगोलकयोरवच्छेदकताभेदेनाधिकरणताभेदात् । यद्यपि च पर्वते प्रतियोगावच्छेदके अव- च्छेदकता न भिद्यते । किंतु क्षणनिष्ठैव संबध्यत इत्युच्यते, तदा हेत्वधिकरणपर्यवसानावच्छेदकतैव मात्रपदार्थः । तादृशपर्याप्त्यर्थैव न कोपि दोष इत्यवधेयं । अवच्छेदकान्तरेति । सप्तमीपदनिर्देश्य देशकालयोरेवावच्छेदक-

न्यायरत्नं ।

यक्तत्वात् । वस्तुतस्तु हेत्वधिकरणनिष्ठा या देशविधयावच्छेदकता तदन्यहेतुतावच्छेदकसंबन्धावच्छिन्नसानुयोगिनिरूपिताधिकरणतानवच्छेदकनिष्ठावच्छेदकताक यत्त्वं तत्तद्वह्निमत्साध्यसामानाधिकरण्याभावाधिकरणतावद्वह्निमत्त्वमिति निष्कर्षो विवक्षित । एवंच स्वनिष्ठाधिकरणताया सानुयोगिनिरूपितहेतुतावच्छेदकसंबन्धावच्छिन्नाधिकरणत्वात्मना सर्वदेशोपादानायोगेन संबन्धान्तरेणेति प्रत्यवहारः । एतावता निरुक्ताधिकरणताया हेतुतावच्छेदकसंबन्धावच्छिन्नानुयोगिनिरूपिताधिकरणतानवच्छेदकत्वनिष्ठत्वमवयवादिनिष्ठावच्छेदकतानिष्ठत्वं तदा सर्वदेशोपादानसंभवात्स्वाश्रितदेशमात्रपदार्थ इत्याशयो बोध्यम् । अवच्छेदकान्तरानवच्छिन्नेति । विशिष्टावच्छे-

यो व्याप्यवृत्तिरेवेति तत्राधिकरणविशेषस्यावच्छेदकत्वं निर्युक्तिक प्रतियोगिमति अभाववृत्तावेव विरोधभञ्जनार्थं अवच्छेदकभेदापेक्षणात्। धूमवत्कपालादिसमवेत एव वह्निमन्महानससंयुक्तघटादौ महानसाद्यवच्छेदेन वह्निमत्संयुक्तत्ववति हेतुमत्कपालाद्यवच्छेदेन वह्निमत्संयुक्तत्वाभावसौलभ्येऽपि एतद्रूपवानेतद्रसादित्यादौ एतद्रूपादिमत्समवेतत्ववति हेत्वधिकरणावच्छेदेन प्रतियोगिसत्त्वात्तदवच्छेदेन साध्यासामानाधिकरण्याभाववत्त्वासम्भवात्। एतद्रूपादिमति सम्बन्धान्तरमात्रेण वर्तमाने साध्यवत्समवेतत्वाभावस्य व्याप्यवृत्तितया हेत्वधिकरणानवच्छिन्नत्वविरहेण निरुक्ताभावाप्रसिद्धेर्दुर्वारत्वादिति वाच्यम्। पर्वते रूपे न वह्निमत्संयुक्तत्वमिति प्रतीतिबलेन व्याप्यवृत्तेरपि साध्यासामानाधिकरण्याभावाधिकरणविशेषावच्छिन्नत्वोपगमात्। यत्तु व्याप्यवृत्तेरभावस्याधिकरणविशेषावच्छिन्नत्वानुपगमे हेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्यवद्वृत्तित्वाभावाधिकरणतासामान्ये हेत्वनुयोगिकत्वहेत्वधिकरणविशेषावच्छिन्नत्वोभयाभावो विवक्षणीयः। तथाच धूमादिनिष्ठस्वावयवाद्यवच्छिन्नतदधिकरणताया हेतुतावच्छेदकसम्बन्धेन हेतुमदवच्छिन्नत्वस्य रूपादिनिष्ठवह्निमत्संयुक्तत्वाद्यभावाधिकरणताया घटादिनिष्ठधूमवत्कपालावच्छिन्नतदधिकरणताया च हेत्वनुयोगिक-

कृष्णभट्टीय ।

त्वमित्याविष्कर्तुं । यत्तु तद्घटप्रागभाववान् तद्घटध्वंसादित्यादौ हेतौ साध्यविशिष्टवृत्तित्वाभावसत्त्वादव्याप्तिरिति। तन्न, तत्र कालविशेषस्यावच्छेदकघटकत्वात्। तद्घटध्वंसे घटवृत्तित्वस्यानवच्छेदककालावच्छिन्नघटस्य तद्सम्बन्धित्वात् उक्तरीत्यैवोपपत्तौ विशेषणपूरणमस्वरस । व्याप्यवृत्तेर्नावच्छेदकमिति वादिनां निष्कर्षमुत्थापयति । यत्त्विति । अयोगोलकवृत्तित्-

न्यायरत्न ।

दकतानिरूपितहेत्वधिकरणनिष्ठावच्छेदकतावत्त्वमर्थ । अनाहुरित्यस्वरस तद्बीजं तु रूपनिष्ठवह्निमत्संयुक्तत्वाभावाधिकरणतावच्छेदकतायां पर्वतनिष्ठायामपि पर्वतत्वस्यावच्छेदकत्वमाऽवच्छेदकान्तरानवच्छिन्नहेत्वधिकरणनिष्ठावच्छेदकताप्रसिद्ध्याऽसम्भव । अवच्छेदकान्तरनिष्ठविलक्षणावच्छेदकतानिवेशेऽपि तत्तदवान्तरकालावच्छिन्नपर्वतादेस्तत्क्षणत्वकल्पनापेक्षया तत्तदवान्तरकालस्यैव क्षणत्वसम्भवेनोत्पत्तिक्षणनिष्ठावच्छेदकतायामप्यवच्छेदकान्तरानवच्छिन्नत्वात्तदव्याप्तिर्नेति । यत्त्विति । अयोगोलकवृत्तिकृणादिनिष्ठाधिकरणतायामुभयाभाव-

**व्यभिचारिण(स्तु)श्च व्यभिचारनिरूपकाधिकरण एव तादृशि तादृशाभाववत्त्वम् ।**

---

त्वस्याभावेनोभयाभावस(व)त्त्वाल्लक्षणसमन्वय इति तन्न । व्याप्यवृत्तेरवच्छेदकाननुगमे पृथिवी रूपादित्यादावतिव्याप्तिः । पृथिवीत्वादिव्यभिचारिजलीयरूपादिनिष्ठसाध्यासामानाधिकरण्याभावस्य व्याप्यवृत्तितया तदधिकरणतासामान्ये निरुक्तोभयाभावस्याक्षतत्वात् । हेत्वधिकरणावच्छिन्नत्वोभयाभावस्यैव तत्र निवेशनीयत्वान्नायं दोषः । जलरूपनिष्ठपृथिवीसमवेतत्वाभावाधिकरणताया अवच्छिन्नत्वविरहेणोभयाभावसत्त्वात् । एवंच तावतैवोपदर्शिताप्रसिद्धेरपि निवारितत्वात् । तादृशोभयाभाववदधिकरणतावदन्यत्वमेव निवेशनीयम् । न तूक्ताधिकरणतासामान्ये हेत्वनुयोगिकत्वतादृशोभयाभाववत्त्वोभयाभावः प्रयोजनविरहादिति चेदेवमपि वक्ष्यमाणायाः कालिकादिसम्बन्धेन हेतावव्याप्तेरसङ्गतिर्दुर्वारैवेति । तत्र कालिकसम्बन्धेनावृत्तिगगनादावेव दर्शितोभयाभाववत्साध्यसामानाधिकरण्याभावाधिकरणतायाः प्रसिद्धेः[१] । अवृत्तावेव सर्वत्र तादृशाभावप्रसिद्ध्या सम्बन्धान्तरेण वर्तमानपर्यन्तानुधावनविरोधश्च । तस्माद्व्याप्यवृत्तेरप्यवच्छेदकत्वमेव ग्रन्थकारानुमतमित्यवधेयम् । द्रव्यं सत्त्वादित्यादावाशङ्कितामतिव्याप्तिमुद्धरति । **व्यभिचारिणश्चेति । तादृशीति ।** हेतुतावच्छेदकसम्बन्धेन हेतुमतीत्यर्थः । अवच्छेदकत्वे सप्तम्यर्थः । **तादृशाभाववत्त्वम् ।** हेतुतावच्छेदकसम्बन्धेन साध्याभावव-

कृष्णभट्टीय ।

णादिनिष्ठधूमवद्वृत्तित्वाभाववत्तायामुभयाभावसत्त्वादतिव्याप्तेः सामान्यपद । तदर्थो व्यापकत्व तथाच तादृशाधिकरणत्वव्यापक हेत्वनुयोगिकत्वयद्धर्मावच्छिन्नाधिकरणविशेषावच्छिन्न वोभयाभाव तद्धर्मवत्त्वमित्यर्थ । धूमादिरूपादिनिष्ठेत्यादि तदुभयप्रयोजनम् । नच धूमाद्यन्यतरत्वधुक्त्वाभयपवाच्छेदेनेत्यादिरीत्या व्याप्ति । दलद्वयेऽपि तद्व्यक्तित्वात्मकैकधर्मस्यैव यद्धर्मपदेनोपादानात् पुनश्मते तादृशस्यावयवस्यासत्त्वाच्च धूमान्तरेण वृत्त्यनियामक-

न्यायरत्न ।

सत्त्वादतिव्याप्ते सामान्यपदम् । **पृथिवीरूपादित्यादाविति ।** यद्यपि धूमवान् वह्निरित्यादावप्ययोगोलकीयवह्निनिष्ठतादृशाधिकरणताया व्याप्यवृत्तितया-

१ त्वस्यात्र अवच्छिन्नत्वहत्वधिकरणावच्छिन्नत्व भा पा

सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतेः । नचैवं विशिष्टसत्वेऽव्याप्तिः । विशिष्टस्यातिरिक्तत्वात् ।

---

वृत्तित्वाभाववत्वम् । अत्र प्रमाणाकाङ्क्षायामाह—सत्तायामिति । ईदृशप्रतीत्या द्रव्यत्वसामानाधिकरण्यवत्यामपि सत्तायां तदनवच्छेदकगुणाद्यवच्छेदेन तदभाववत्त्वावगाहनादिति भावः । एवं सत्तायां द्रव्यत्वसामानाधिकरण्याभावोपगमे । विशिष्टसत्वे गुणान्यत्वविशिष्टसत्तात्वाद्यवच्छिन्ने । अव्याप्तिरिति । गुणाद्यवच्छेदेन साध्यसामानाधिकरण्याभाववति केनापि रूपेण तदनधिकरणत्वासंभवादिति भावः । विशिष्टस्यैति । तथाच विशिष्टसत्वं द्रव्यमात्रवृत्तित्वदधिकरणत्वं न गुणादेरिति न हेत्वधिकरणावच्छेदेन हेतौ साध्यसामानाधिकरण्याभाववत्वमिति नाव्याप्तिरिति भावः । यद्यपि हेतुतावच्छेदकविशिष्टहेत्वधिकरणावच्छिन्नत्वं निवेश्यापीयमव्याप्तिः शक्यते वारयितुं तथापि प्रकारान्तरेण वारणसंभवे अधिकनिवेशनमनुचितं इत्यभिप्रेत्य विशिष्टातिरिक्तत्वपक्ष आश्रितः । नच हेतुतावच्छेदकविशिष्टाधिकरणतानिवेशनमवश्यकम् । अन्यथा इदं स्पर्शवत् मूर्तत्वमूर्तत्वोभयत्वादित्यादौ भूतत्वे मूर्तत्वे च हेतौ स्वाधिकरणे गगने मनसि च साध्यसामानाधिकरण्यविरहेणाव्याप्तिप्रसङ्गादिति वाच्यम् । उभयत्वस्य एकविशिष्टापरत्वरूपतामवलम्ब्य विशिष्टस्यानतिरिक्ततया तत्र स्वावच्छिन्ननिरूपिताधिकरणत्वरूपपरम्परासंबन्धे-

कृष्णभट्टीय ।

एव संयोग. हेत्वधिकरणताच लक्षणघटितेयुक्तिसंभवाच्च । धूमवान् वह्नेरित्यादौ धूमवत्साधारणवह्निसंभवाद्वाऽतिव्याप्तिरत पृथिवीति । शङ्कते—हेत्वधीति । जलेति । क्षितिजलोभयवृत्तिर्दीर्घदण्डे क्षितिमात्रवृत्तिवद्धदवृत्तित्ववत्तायां हेत्वधिकरणावच्छिन्नत्वप्रसिद्धि । ईदृशेति । अत्र सत्ता द्रव्यवृत्तित्वाभाववती द्रव्यवृत्तित्वाभावविशेष्यकाभेयतासंबन्धावच्छिन्नप्रमाप्रकारत्वात् । यो यद्विशेष्यकप्रमाप्रकार. स तद्वानिति व्याप्तेरिति प्रयोग । केनापीति । विशेष्यवृत्तिवृत्तिप्रतियोगितावच्छेदकताकभेदानुयोगिताया विशिष्टे अनङ्गीकारात् । विरुद्धमिथोभयत्वस्यैकत्रिविशिष्टापरत्वरूपत्वासंभवादुभयत्वमात्रस्यैवातिरिक्तत्व स्वीकृत्य तस्यैव हेतुत्व स्वीकुर्यामिति समाध्यन्तरमाह—

१ अनुभवाद् ना. पा. २ गुणकर्मान्यत्वविशिष्ट ना. पा.

नोभयत्वस्यैव वा तत्राव्याप्तेः समाधानसंभवात् । ननु द्रव्यं गुणान्यत्वेसति सत्त्वादित्यादौ विशिष्टातिरिक्ततापक्षमवलम्ब्याव्याप्तेर्वारणं न विचारसहम् । तथाहि । गुणादिवृत्तिसत्तादितो गुणान्यत्वविशिष्टसत्तादेरतिरिक्तत्वेऽनुगतधर्ममात्रोच्छेदः । एकव्यक्तिवृत्तित्वविशिष्टस्य अपरव्यक्तिवृत्तित्वविरहेऽपि शुद्धसत्तादिकमनुगतं निराबाधमेवेति वाच्यम् । शुद्धसत्तादौ तत्तद्व्यक्तिवृत्तित्ववैशिष्ट्याभ्युपगमे भवतां तदेकत्वासंभवात् । तदेवाभ्युपगमे तस्यावृत्तित्वाप्रसङ्गात् । एवं सर्वेषामेव वस्तूनां तत्तत्क्षणादिवृत्तित्वरूपविशेषणभेदाद्भेदप्रसक्त्या क्षणभङ्गापत्तिपर्यवसान(नं दुर्वार)मेव । अथ प्रत्यभिज्ञाद्यनुरोधेन एकस्मिन्नानादेशकालवृत्तित्ववैशिष्ट्यं स्वीक्रियत एव । परन्तु गुणे द्रव्यवृत्तित्वविशिष्टसत्ता नास्ति इदानीं पूर्वक्षणवृत्तित्वविशिष्टघटत्वं नास्तीति प्रतीत्यनुरोधेन मिथो भिन्ना अपि तत्तद्वि(शेषणवि)शिष्टसत्त्वत्वादयः स्वीक्रियन्ते । तदवलम्बनतयैवैतादृशप्रतीत्यनुपपत्तिः । द्रव्यवृत्तित्ववैशिष्ट्यपुरस्कारेण चानुगतसत्त्वादेर्द्रव्यत्वानुमापकता न स्वीक्रियते।अपितु तदन्यतादृशविशेषणविशिष्टस्य गुणाद्यवृत्तिवस्तुन एवेति तत्र द्रव्यत्वादिव्याप्तिविरहेऽपि न क्षतिरितिचेत्तादृशवस्तूनां केन रूपेण व्याप्यता । न द्रव्यवृत्तित्वविशिष्टत्वेन तादृशरूपस्याव्याप्यानुगतधर्मसाधारणात् । नापि तादृशविशेषणविशिष्टतत्तद्व्यक्तित्वादिना तादृशविशेषणवैशिष्ट्यांशस्य वैयर्थ्यात् । तद्व्यक्तित्वानुपस्थितावनुमानानिर्वाहाच्च । एवं विशिष्टसत्ता नास्तीत्यत्र विशिष्टस्याप्यवच्छिन्नाभावस्य न विषयतासंभवः तद्रूपानवच्छिन्नानुगतसत्तावति तद्रूपावच्छिन्नाभावा-

कृष्णंभट्टीयं ।

तत्रेति । ननु यथा परंपरासंबन्धेनोभयत्वस्य हेतुत्वं तथा विशिष्टानतिरिक्तत्वेऽपि वैशिष्ट्यस्यापि स्वावच्छिन्ननिरूपितसमवायेन हेतुत्वं वक्तुं शक्यत इति चेदिदमेवानतिरेकेत्वित्यादिना उद्धार्यं । इदानीं पिहितमित्यदोषः । न केवलमनुगतधर्ममात्रोच्छेदप्रसंगमात्रं किंत्वन्यदपीत्याह—एवमिति । अनुगतधर्ममात्रोच्छेदं क्षणभङ्गापत्तिपर्यवसानं चोद्धृत्य विशिष्टशब्दबोध्यवस्तुनोऽतिरिक्तत्वं व्यवस्थापयति । परंत्विति । न द्रव्यत्वेति । तस्या एव गुणादौ सत्वेन व्यभिचारित्वात् । वस्तुन एवेति । केन रूपेण तादृशवस्तुनो हेतुतेति चेदिदानीं रूपविवेचनं नास्त्येवेति बोध्यम् । धर्मं सत्तादिः । वैशिष्ट्यांशत्यागेऽप्याह—तद्व्यक्तित्वादिति । विशिष्टसत्ता नास्तीति प्रत्य-

१ हेतुत्व स्वीकृतैव वा. मै. पा.

अनतिरेके तु विशेषणविशेष्यसंबन्धस्यैव परंपरया व्या(प्र)-प्यत्वात् ।

---

संभवात् । नापि तत्तद्व्यक्तित्वावच्छिन्नाभावस्य तत्तद्व्यक्तित्वस्य प्रतियोगितावच्छेदककोटावनुप्रवेशात् । विशेषणावच्छिन्नप्रतियोगिकसंबन्धो विलक्षणः स च नानुगतसत्तायाः संबन्धः, अपितु अतिरिक्तविशिष्टसत्ताया एवेति प्रतियोगितावच्छेदकधर्मस्य गुणादिवृत्तिसत्तासाधारण्येऽपि तत्र विशिष्टभावोऽक्षत एव । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकशून्यत्वमात्रस्य विशिष्टाभावसत्त्वेऽपि स्थितत्वादिति चेत्तर्हि गुणादिसत्ताया एवातिरिक्तसंबन्धो गुणादिव्यावृत्तः स्वीक्रियतां किं सत्तान्तरकल्पनेनेत्यभिप्रेत्याह । अनतिरेके त्विति । विशेषणविशेष्यसंबन्धस्यैवेति । सत्वनिष्ठगुणान्यत्ववैशिष्ट्यस्यैवेत्यर्थः । परंपरया । परंपरासंबन्धेन स्वावच्छिन्ननिरूपितसमवायादिसंबन्धेनेति यावत् । व्याप्यत्वादिति । गुणान्यत्ववैशिष्ट्यावच्छिन्नायाः अधिकरणताया गुणादावसत्वात् । तादृशसंबन्धेन तद्वैशिष्ट्यस्य द्रव्यमात्रवृत्तित्वादिति भावः । एवकारेण सत्तायाः व्यवच्छेदः । यत्र विशेषणविशेषावच्छिन्नसत्ताहेतुकद्रव्यत्वानुमितिरभिमता तत्तद्वैशिष्ट्यहेतुकानुमितिरेवोपेयते वैशिष्ट्यपरंपरासंबन्धेन व्याप्तिधीविरहे चानुमितिरप्रसिद्धैवेति भावः । यद्यपि विशिष्टनिरूपितस्य विलक्षणत्वे तादृशसंबन्धेन सत्ताया अपि व्याप्यत्वं निर्वहति । तथापि विशेषणावच्छिन्ननिरूपितसमवायत्वादिना न सत्तादिसंबन्धता किंतु

कृष्णंभट्टीयं ।

थस्य स्वावच्छिन्नाभावावलम्बनता न स्वीक्रियते । अपितु विशिष्टाभावावलम्बनेत्याशङ्कते । विशेषणेति । तर्हीति । गुणादिव्यावृत्त इति । गुणो विशिष्टसत्तावानिति प्रतीतिनिरासाय सत्ताया इति षष्ठीसंबन्धघटकत्वप्रतियोगिकत्वमात्रायां सत्तासंबन्धतायां अनुपदमेव निराकरणात् । यद्यपीति । एवंच विशेषणविशेष्यसंबन्धस्य व्याप्यत्वानुसरणं व्यर्थमिति भावः । न सत्तादीति । अन्यथा कदाचित् गुणः सत्तावानिति प्रत्ययस्य प्रमात्वमपि स्यात् । नन्वेवं समवायमात्रस्य सत्तासंबन्धत्वे गुणो विशिष्टसत्तावानिति प्रमाप्रसंग इत्याह—किं त्विति ।

---

१ अनतिरिक्ते तु का. पा.  २ संबन्धान्तरकल्पनेनेति भे. पा.

केवलान्वयिनि चाव्याप्तेरभिधानं द्वितीयलक्षणाभिप्रायेणेत्याहुः।

---

विशिष्टसत्तावानिति प्रत्यये वैशिष्ट्यस्यैव सत्तादिविशेषणतापन्नस्य निरुक्तपरम्परासम्बन्धेन धर्म्मिणि विशेषणत्वोपगमान्नातिप्रसङ्ग इत्याशयेनेदमभिहितम्। नन्वेवरीत्या प्रथमलक्षणपरिष्कारे वक्ष्यमाणे केवलान्वयिसाध्यकाव्याप्त्यप्रसङ्ग इति। तत्रापि सम्बन्धान्तरेण हेतुमद्वृत्तौ हेत्वधिकरणानवच्छिन्नसाध्यसामानाधिकरण्याभावप्रसिद्ध्या लक्षणगमनसम्भवादत आह—केवलान्वयिनीति। द्वितीयलक्षणेति। नच तत्रैतन्नेनोभयत्वाद्यवच्छिन्नस्यैव परामर्शात्प्रथमलक्षणेऽव्याप्त्यसम्भवेऽसङ्गतिर्दुर्वारैवेति वाच्यम्, केवलान्वयिसाध्यके धूमे चाव्याप्तिप्रदर्शनात् तदुभयत्वेनोपस्थितप्रथमलक्षणेऽव्याप्त्यसम्भवेऽपि लक्षणद्वये यथायोग तत्तत्स्थले व्याप्त्यन्वये तात्पर्यात्। यद्यपि धूमादावपि साध्यसामानाधिकरण्यसामान्याभावघटितस्य प्रथमलक्षणार्थस्य नाव्याप्त्यनवकाशः। तथापि यत्किञ्चित्साध्यवदवृत्तिभेदनिवेशाभिप्रायेण

कृष्णभट्टीय।

सत्तादिविशेषणतेति। द्रव्य वैशिष्ट्यवदिति प्रत्ययात्। नातिप्रसंगः न गुणे गुणान्यत्वविशिष्टसत्तावानिति प्रत्ययस्य प्रमात्वप्रसङ्ग। तथाच विशेष्यस्य शुद्धसम्बन्ध इति वैशिष्ट्यस्य साध्यव्याप्यत्वमनुगतमिति भाव। यद्यपि विशिष्टसत्तानिरूपितसम्बन्धो विशिष्टाधारतादि सत्तासम्बन्ध तेन संबन्धेन सत्तावानिति प्रत्यय गुणो विशिष्टसत्तावानिति प्रत्ययश्च प्रकारतावच्छेदकत्वेन वैशिष्ट्यभान एव तत्सम्बन्धभानमिति नियममुपेत्य वारणीय। एवञ्च तेन सम्बन्धेन विशिष्टसत्ताया अपि व्याप्यत्व सम्भवतीति वैशिष्ट्यस्यवेशवैयर्थ्यम्। तथापि सम्बन्धो न सार्वभौमाभिमत इति प्रदर्शनार्थैवमा अतएवाशयेनेत्युक्तम्। द्वितीयलक्षणे साध्यवत्सामान्यभेदनिवेशे धूम इत्युक्तस्थलेऽपि स्यात् अव्याप्त्यभावात्। अतस्तद्व्याप्तेर्विशेषनिवेशाभिप्रायकस्य वाच्यम्। तथासति तद्रीत्या प्रथमलक्षणाव्याप्तिरिति दुर्वारैवेत्याशयेन समाधत्ते—तथापीति। यत्किञ्चिदिति साध्यवदिति

व्याप्तय।

इतिव्याप्तिर्धनवत्यपि धूमादावव्याप्तिरनवकाशा सार्वभौमस्य निवेशाभिप्रायकम्। ननु उक्तगमनया लक्षणद्वयेऽपि व्याप्त्यप्रदर्शन-मेव न सार्वभौमस्याभिप्रायो नापि तद्रीत्यासङ्गतिरत आह—यदपीति।

तच्चिन्त्यम्। सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतिर्हि द्रव्यत्वे गुणे न पृथिवीत्वसामानाधिकरण्यमिति प्रतीतिवत्सत्तानिष्ठद्रव्यत्वसामानाधिकरण्यावच्छेदकत्वस्य परंपरासंबन्धेन सामानाधिकरण्यस्य वा अभावं गुणेऽवगाहते। नतु सत्तायामेव द्रव्यवृत्तित्वाभावं।

---

द्वितीयलक्षणस्यैव यत्किञ्चित्साध्यसामानाधिकरण्याभावनिवेशाभिप्रायेणैव प्रथमलक्षणस्यापि नानाव्यक्तिसाध्यकस्थलेऽव्याप्तिप्रदर्शनमविरुद्धम्। मूलेच यत्किञ्चित्साध्यानधिकरणाधिकरण इत्युपलक्षणम्। यत्किंचित्साध्याधिकरणावृत्तावित्यपि बोध्यम्। तेन प्रथमलक्षणाव्याप्तिसंपादकहेत्वकथनान्न्यूनत्वस्य नावकाश इतिध्येयम्। सामानाधिकरण्यस्याव्याप्यवृत्तितायां प्रमाणसिद्धायामेव दर्शितातिव्याप्तिर्वारयितु शक्यते। तत्रैव न प्रमाण उक्तप्रतीतेरन्यविषयकत्वादित्याह—सत्तायामिति। प्रतीतिर्हि इति। अभाव गुणेऽवगाहत इत्यग्रिमेणान्वयः। अवच्छेदकत्वस्येति। निरूपकत्वस्येत्यर्थः। तेन सामानाधिकरण्यस्य व्याप्यवृत्तित्वमते तदवच्छेदकत्वस्य प्रामाणिकत्वेऽपि न क्षति.। उक्ताकारप्रतीतौ अवच्छेदकत्वानुल्लेखात्। अवच्छेदकत्वाभावावगाहिता न संभवतीत्याशङ्क्याह—परंपरेति। ननु परपरासंबन्धो न वृत्तिनियामकः। आकाश द्रव्यत्वसामानाधिकरण्यवदित्यप्रत्ययात् इति उक्तसबन्धावच्छिन्नाभाव एवाप्रामाणिक इति तादृशाभावावलम्बनतापि नोक्तप्रतीतेः सभवतीत्याशङ्कोद्धारायानुरूपद-

कृष्णभट्टीय।

बोध्यम्। विशिष्टानतिरिक्तामते साध्यतावच्छेदकावच्छिन्नविनाशैव विशिष्टसत्तादिसाध्यकाव्याप्तिवारणात् तदतिरिक्तामते तु लक्षणद्वयेऽपि साध्य एव तन्निवेशेऽपि न क्षति। सामानाधिकरण्येति दीधितिदर्शनात् तत्रापि साध्यस्यैव वा सत्। आकाशमिति। सत्तायां गगनान्तर्भावेन द्रव्यत्वसामानाधिकरण्यात्। यतो द्रव्यत्वसामानाधिकरण्यवानिति

न्यायरत्न।

न केवलमनुगतधर्माभावोच्छेद किंत्वन्यदपीत्याह—एवमिति। केचित् ननु विशिष्टसत्तानिष्ठव्यभिचाराननुगतिदशाया नानुमितिरनुभवसिद्धेत्यत आह—

सत्ता न द्रव्यवृत्तित्वाभाववती द्रव्यवृत्तित्वाभावो न सत्तावृ-

---

ष्टान्तमाह—द्रव्यत्वे इति। गुणस्यावच्छेदकतानियामकद्रव्यत्वसम्बन्धशून्यतया द्रव्यत्वनिष्ठाभावावच्छेदकत्वं न सम्भवतीत्यगत्या गुणनिष्ठो द्रव्यत्वपृथिवीत्वसामानाधिकरण्यावच्छेदकत्वस्य परम्परासम्बन्धावच्छिन्नतादृशसामानाधिकरण्याभाव एव तादृशप्रतीतिविषय इति अवश्य उपेयम्। तद्वदत्रापीत्यर्थः। स्वरसतो यादृशशब्दात् यादृशार्थः प्रतीयते तादृशशब्दोल्लिखितप्रत्यये तादृशार्थविषयकत्वमेवास्ति बाधके युज्यत इत्याशयेन दर्शितप्रतीतेः सत्ताया गुणावच्छिन्नद्रव्यवृत्तित्वाभावावगाहितायां बाधकप्रतीतिमाह—सत्ता नद्रव्यवृत्तित्वाभाववतीति। नच द्रव्यवृत्तित्वाभावाभावस्य द्रव्यवृत्तित्वरूपस्य सत्तायामसम्मतेऽपि सत्तात्वम्। नैतस्याः प्रतीतेर्बाधकत्व सम्भवति विरोध्यविषयकत्वादिति वाच्यम्। तादृशशब्देन द्रव्यवृत्तित्वाभावच्छेदस्यैव प्रत्ययनात्। अपरप्रतीतेरपि तद्भेदावगाहित-

कृष्णभट्टीय।

सामान्याकारस्य सर्वमतसिद्धत्वात्म नोक्त। गुणस्येति। समवायरूपतादृशसम्बन्धशून्यत्वमुक्त, सामान्यत तादृशसम्बन्धशून्यत्वे तु नित्य गुणो बोध्य। कालिकसम्बन्धस्य जन्यगुणे सत्त्वात्। अथवा कालिकसम्बन्धस्याप्यवच्छेदकतानियामकत्वे इदमिदानीमिति प्रत्यय स्यात्। नच कालिकसम्बन्धेनावच्छेदकस्यापि पूर्वोक्तयुक्त्या देशविषया अवच्छेदकत्वस्वीकार इति वाच्यम्। तत्कल्पने आत्मत्वाकाशत्वोभयसामानाधिकरण्यसम्बन्धेन निरवच्छिन्नतया तथाभानविरहादुक्तव्याप्तेरप्रयोजकत्वाच्च। कालिकाव्याप्यवृत्तित्वापत्तिविरहाच्च। तत्कल्पस्य सिद्धान्तविरुद्धत्वादित्यपि बोध्यम्। अनुरूपमिति। वृत्त्यनियामकसम्बन्धावच्छिन्नाभावाङ्गीकारे। अन्यथा द्रव्यत्वनिष्ठपृथिवीत्वसामानाधिकरण्ये गुणनिरूपितत्वमर्थो बोध्य। कदाचित् वृत्त्यनियामकसम्बन्धावच्छिन्नाभावो भवतु। सत्तायां गुणे न द्रव्यवृत्तित्वमित्याकारानुरोधात्। सम्बन्धव्याप्यवृत्त्यभाव इति सूचनाय तदुक्तम्। सत्ता नेत्यादिकं न दूषणान्तरं चकाराभावात्। अतो दृष्टान्तेऽस्तु बाधकदोषान्यथोपपादनं प्रकृते किं बाधकमित्याशङ्कायामिदमित्याशयेनानुसार

श्यामरत्न।

एवमिति। द्रव्यवृत्तित्वाभावच्छेदस्यैवेति। तद्बोधकप्रमाणनिश्चायकप्रतियोग्यनुयोगिभावच्छेदकधर्माभिव्याहारयुक्तादिति भाव। अतोऽ'इयगाव्यवृत्ति

या बाधकत्वात् भेदस्याव्याप्यवृत्तिताविरहेण सामानाधिकरण्याभावघटकस्य तदभावविरोधित्वात् । यदि च भेदस्याव्याप्यवृत्तित्वमतमवलम्ब्य तादृशप्रतीतेर्विरोध्यविषयकत्वमुपपाद्यते तदा सत्तायां द्रव्यसामानाधिकरण्याभावेऽपि तदधिकरणभिन्नत्वस्याप्यक्षततयाऽतिव्याप्तिवारणमशक्यमिति भावः । अव्याप्यवृत्तित्वसाध्यकदर्शितप्रतीतेरभावरूपविशेष्ये सत्तावृत्तित्वावगाहितया उपगमात्तत्राभावविशेष्यकसत्तावृत्तित्वविरोधिविषयकप्रत्ययं बाधकतयोपन्यस्यति—द्रव्यवृत्तित्वाभाव इति । यद्यपि द्रव्यवृत्तित्वाभावे सत्तावृत्तित्वं गुणाद्यवच्छेदेन नतु द्रव्याद्यवच्छेदेनेति तदवच्छेदेन तत्र सत्तावृत्तित्वाभावः संभवति । एवं सत्तावृत्तित्वसत्तात्वसामानाधिकरण्यरूपम् । सामानाधिकरण्यस्याव्याप्यवृत्तित्वमते अव्याप्यवृत्तीति । तदनवच्छेदकगुणत्वाद्यवच्छेदेन द्रव्यवृत्तित्वाभावे तदभावः संभवत्येवेति न विरोधः । तथाप्युक्तयुक्त्या दर्शितप्रतीतेः सत्तावृत्तिभेदावगाहितया बाधकत्वं दुर्वारमेव । यत्तु सत्तावृत्त्यभावेऽवच्छेदकभेदेन सत्तावृत्तित्वाभावसंभवेऽपि अवच्छेदकाप्रतीतिदशायां

कृष्णंभट्टीयं ।

यति—स्वरूपसत इति । अशक्यमेवेति । हेत्वधिकरणावच्छिन्नसाध्यसामानाधिकरण्याभावाधिकरणं यद्यत् तत्तद्भिन्नत्वरूपलक्षणकरणे व्याप्यावृत्तिधर्मस्योपलक्षणत्वेनाव्याप्तेः साध्याघटितत्वं विशेषणत्वे तद्विशिष्टव्यक्तित्वमप्यव्याप्यवृत्त्यैव भविष्यति । यदि च तत्समानाधिकरणसकलतद्व्यक्तित्वावच्छिन्नभिन्नत्वमर्थ इति मन्यते, तदापि व्यभिचार्यखण्डद्रव्यवृत्तिरूपाद्यात्मकतद्व्यक्तिकस्थलेऽतिव्याप्तेः । उक्तार्थस्य उदक्षरत्वाच्चेति । यद्यपीत्यादि । नच द्रव्यवृत्तित्वाभावनिष्ठसत्तावृत्तितायां कथं गुणस्यावच्छेदकत्वं अवच्छेद्याधिकरणीभूतद्रव्यवृत्तित्वाभावेन सार्धं गुणसंबन्धाभावादिति वाच्यम् । द्रव्यवृत्तित्वाभावे गुणावच्छेद्यतायाः स्वत्वेन सत्ताद्रव्यवृत्तित्वाभावयोः संबन्धस्य सत्तावृत्तित्वलक्षणस्य तदवच्छेद्यत्वात् । संयोगस्यावच्छेद्यतया तत्समवायादेस्तदवच्छेद्यत्वादिति । अथवा यदभावो यदवच्छेदेन तदभाववन्निष्ठवृत्तित्वमपि तदवच्छेदेनैवेत्यनुभवानुसारेण तथोक्तिः । तदनवच्छेदकेति । द्रव्यवृत्तित्वाभावे गुणत्वे सत्तावृत्तित्वं नास्तीति अनुभवादिति भावः । दुर्वारमेवेति । एवंच प्रसारकद्रव्यवृत्तित्वाभावो न सत्तावृत्तिरिति प्रत्ययसत्वे सत्तायां गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीते-

त्तिरित्यादिसर्वजन(प्रसिद्ध)प्रतीतिबाधितत्वात् । बाधकाभा वात्तु संयोगतदभावयोरवच्छेदकभेदेन एकत्र प्रतीत्या तदुभयोरेकत्र प्रसिद्धिः । अतीन्द्रियसाध्यकेऽतीन्द्रिये व्यभिचारि-

---

जायमानप्रत्ययस्य सत्तावृत्तित्वग्रहप्रतिबन्धकतया तदुत्तरं जायमानायाः सत्ताया गुणे न द्रव्यत्वसामानाधिकरण्यमिति प्रतीतेः सामानाधिकरण्याभावे सत्तावृत्तित्वावगाहित्वासम्भवेन गुणनिष्ठसामानाधिकरण्यावच्छेदकत्वाद्यभावावगाहित्वे सर्वत्रैव तदवगाहित्वकल्पनमुचितमिति भाववर्णनम् । तदसत् । एवं सति अवच्छेदकाविषयिण्या द्रव्यसमानाधिकरणत्वेन सत्ताया तत्सामानाधिकरण्यविषयकप्रतीतेरपि बाधकतासम्भवेन सत्ता न द्रव्यवृत्तित्वाभाववतीत्यादिपर्यन्तानुधावनस्य निर्बीजत्वापातात् । नन्वेवं संयोगादिमति संयोगादेरप्यभावो नायातु मूले न कपिसंयोग इति प्रतीतेरपि मूलनिष्ठसंयोगाद्यवच्छेदकत्वाभावावलम्बनतयोपपत्तेरित्यत आह—बाधकाभावादिति । तत्र कपिसंयोगाभावो वृक्षावृत्तिरित्यादिप्रत्ययस्याननुभवादिति भावः । संयोगाभावे वृक्षावृत्तित्वप्रत्यय इव द्रव्यवृत्तित्वाभावे सत्तावृत्तित्वप्रत्ययेऽपि विवादसम्भवात् न सामानाधिकरण्याभावस्य न प्रत्यक्षसम्भवः तत्र तत्सत्त्वे मानाभावेन तदनधिकरणत्वनिष्प्रत्यूहमित्यतिव्याप्तिरित्याह—अतीन्द्रियसाध्यकमिति ।

कृष्णभट्टीयं ।

न्यवृत्तित्वाभावविषयकाया असम्भवः । कथञ्चिज्जातायाश्च पूर्वप्रतीतिविषयविरुद्धार्थविषयकत्वेन भ्रमत्वं । नहि विरुद्धविषयकयोरुभयोः प्रतीत्योः प्रमात्वसम्भवः । एवञ्च सत्ताया गुण इत्यादिप्रतीतिः प्रमात्वे सति गुणावच्छेदेन द्रव्यवृत्तित्वाभावानवलम्बनतां तद्विरुद्धद्रव्यवृत्तित्वाभाववद्भिन्नत्वप्रकारकप्रमात्मकप्रत्ययकत्वादिति प्रयोगः । यः प्रत्ययः यत्पदार्थविरुद्धपदार्थविषयकप्रमात्मकत्वस्या तद्वत् स प्रमात्वे सति तत्पदार्थविषयकत्वाभाववानिति व्याप्तेः । यद्वा सत्ता द्रव्यवृत्तित्वाभावनिष्ठप्रमीयविषयतानिरूपितविषयताशून्यद्रव्यवृत्तित्वाभाववद्भिन्नत्वनिष्ठप्रमाप्रकारतानिरूपितविशेष्यताशालित्वात् । यद्विपरीतनिष्ठप्रमाप्रकारतानिरूपितविशेष्यताशालित्वं यत्र तत्र तन्निष्ठप्रमाविषयतानिरूपितविषयताशून्यत्वमिति व्याप्तेरिति । अतीन्द्रियसाध्यक इत्यादि दीधितौ अतीन्द्रियसाध्यकमेकं अतीन्द्रियहेतुकं चरममिति व्यभि

व्याप्तिग्रसङ्गाच्च। तत्र सामानाधिकरण्याभावस्य प्रत्यक्षासंभवेनासिद्धेः। नच तदभाववद्वृत्तित्वेन तत्र तदनुमेयं तद्वद्वृत्तिभि-

---

इदं गुरुद्रव्यत्वात्पृथिवी गुरुत्वादित्यादावित्यर्थः। अथवा स्तम्भादौ पिशाचत्वाभावस्यैव स्तम्भत्वादौ पिशाचत्वसामानाधिकरण्याभावस्य महति वायौ रूपाभावस्येव महत्त्वादौ रूपसामानाधिकरण्याभावस्यापि प्रत्यक्षत्वादुभयत्रातीन्द्रियत्वोपादानम्। तत्रेति। गुरुत्वादिसाध्यकस्थले साध्यसामानाधिकरण्याभावस्यातीन्द्रियप्रतियोगिकतया अतीन्द्रियत्वेन अतीन्द्रियहेतुकस्थले च धर्मिण एव तथात्वात्। हेतौ साध्यसामानाधिकरण्याभावस्य प्रत्यक्षासंभवेन तत्र तदसिद्धेरित्यर्थः। तदभाववद्वृत्तित्वेन गुरुत्वाभाववद्वृत्तित्वेन। तत्र द्रव्यत्वादौ। तत् गुरुत्वादिमद्वृत्तित्वाभावपरम्। अनुमेयमिति। तद्विरुद्धदृष्टान्तेनेत्यादिः। तद्वदिति।

कृष्णभट्टीय।

चारित्व्य प्रतीयत इत्याशयेनाह—इदं गुर्विति। साध्यविशिष्टवृत्तित्वाभावनिवेशमभिप्रेत्य। ननु दीधितौ गुरुत्वविशिष्टवृत्तित्वाभावस्यैव प्रत्यक्षासंभव उक्त। तस्य क्षितिपाथोन्यतरवृत्तित्वाभावात्मकत्वात्। ननु तदुपलक्षितवृत्तित्वाभावरूपस्य गुरुत्वसामानाधिकरण्याभावस्य तेजआद्यवच्छेदेन द्रव्यत्वादौ पृथिवीजलान्यतरवृत्तित्वाभावस्य प्रत्यक्षतया गुरुवृत्तित्वाभावस्यापि तदात्मकत्वेन प्रत्यक्षत्वात्। नच समनियताभावभेदमते दीधितिसंगतिः। तथापि प्रत्यक्षमूलेन जलपृथिव्यन्यतरवृत्तित्वाभावरूपलिङ्गेन तदनुमानसंभवात्। तथाच गुरुत्वसाध्यके नातिव्याप्तिसंभव वक्ष्यमाणोपाधेरुपाधित्वभङ्गाच्च। चकारादर्शनेन व्यभिचारित्वालाभ वक्ष्यमाणास्वरसश्चेति मनस्त्ववदणुत्वादित्येकव्यभिचारिपरतामाह—अथवेति। दृष्टान्ताभ्यां क्रमेणोक्तस्थले साध्यसामानाधिकरण्याभावप्रत्यक्षलाभ। तद्विरुद्धम्। आत्मत्वोष्णस्पर्शादि। नन्वणुत्व गनोवृत्तित्वाभाववत् मनस्त्वाभाववद्वृत्तित्वादात्मवदित्यादौ साध्ये व्यभिचारनिरूपकाधिकरणावच्छेदकत्वस्य कथ

न्यायरत्न।

दीधितावतीन्द्रियसाध्यकमेकमपरं चातीन्द्रियहेतुकमिति व्यभिचारिद्वय प्रतीयत इत्याशयेनाह—इदं गुर्विति। ननु गुरुत्वविशिष्टवृत्तित्वाभावस्यातीन्द्रियतादृशवृत्तित्वप्रतियोगिकतयाऽतीन्द्रियत्वेऽपि गुरुत्वोपलक्षितवृत्तित्वाभावस्य जलपृथिव्यन्यतरवृत्तित्वाभावात्मकस्य न तथात्वक्षणे साध्योपलक्षिताधिकरणवृत्तित्वा-

